पुरीभेदे स्त्री॰यत्र वकासुरवधार्थं पाण्डवाः स्थिताः [सर्पादौ

**एकचर** त्रि॰ एकः सन् चरति पचाद्यच् । एकाकिचारिणि

**एकचर्य्या** स्त्री॰एकस्य चर्या चर,क्यप् । असहायगमने ।

**एकजाति** पु॰ एका जातिर्जननं यस्य । शूद्रे । एकजन्माप्यत्र

**एकजातीय** त्रि॰ एकः प्रकारो विधा यस्य प्रकारार्थे जातीयर् । तुल्यप्रकारा ।

**एकतम** त्रि॰ एक+डतमच् । बहूनां मध्ये जात्यादिभिर्निर्द्धार्य्ये एकस्मिन् । यथा भवतामेकतमः साधुः ।

**एकतर** त्रि॰ एक+डतरच् । द्वयोर्मध्ये जात्यादिभिर्निर्द्धार्य्ये एकस्मिन् । यथा, भवतोरेकतरः साधुः ।

**एकतान** त्रि॰ एकं तानयति चु॰ तन-श्रद्धायाम् अण् । अनन्यचित्तवृत्तौ एकविषयासक्तचित्ते तद्गतचित्ते च ।

**एकताल** पु॰ एकः समस्तालोमानं यत्र । समन्वितलये, विच्छेदरहिते च नृत्यगीतादौ ।

**एकत्र** अ॰ एक+त्रल् । एकस्मिन्नित्यर्थे । [व्यावर्त्तके च ।

**एकत्व** न॰एक-त्व । ऐक्ये, अभेदे,साम्ये, सायुज्यमुक्तौ, भेद-

**एकदण्डिन्** पु॰ एकः केवलः शिखायज्ञोपवीतादिशून्यो दण्डोऽस्यास्ति । “यदा हृदाध्यवसितं परंब्रह्म सनातनम् । तदैकदण्डं संगृह्य सोपवीतां शिखां त्यजेदित्युक्तलक्षणे परिव्राजके ।

**एकदन्त** पु॰ एको दन्तोऽस्य । गणेशे । एकदंष्ट्रोऽप्यत्र ।

**एकदा** अव्य॰ एक+काले दाच् । एकस्मिन् काले इत्यर्थे ।

**एकदृक्** त्रि॰ एका दृक् यस्य । एकनेत्रे काणे । काके पु॰ । एकं सर्व्वमभिन्नं पश्यति दृश-क्विप् । शिवे ।

**एकदेश** पु॰ कर्म्म॰ । अवयवे, प्रतीके ।

**एकधा** अव्य॰ एक+प्रकारे धाच् । एकप्रकारे “एकधा बहुधा चैव दृश्यते जलचन्द्रवदि”ति श्रुतिः ।

**एकधुरा** स्त्री॰ एका धूः कर्म्म॰ अच् । एकभारे । तद्वहतीत्यर्थेऽण् तस्य लुक् । एकभारवाहके गवादौ । [वाहके गवादौ ।

**एकधुरावह** त्रि॰ एकधुरां वहतीति वह-अच् । एकभार-

**एकधुरीण** त्रि॰एकधुरां वहतीति ख । एकभारवाहके गवादौ

**एकपक्ष** त्रि॰ एकः पक्षो यस्य । सहाये ।

**एकपत्नी** स्त्री॰ एकः समानः अनन्योवा पतिर्यस्याः ङीप् नुक् च । सपत्न्यां पतिव्रतायाञ्च । योधर्म्मएकपत्नीनामिति मनुः

**एकपद** न॰ एकं पदं पदगतियोग्यकालो यत्र । एकपदगतियोग्यकाले तत्काले । कर्म्म॰ । एकस्मिन् पदे । निहन्ति स यकपदे इति माघः । [वर्त्मनि पथि ।

**एकपदी** स्त्री॰ एकः पादोऽस्याम् । स्वाङ्गत्वात् ङीष् पद्भावः ।

**एकपदे** अव्य॰ एक+पद-के । अकस्मादित्यर्थे ‘कथमेकपदे निरागसं’मिति कुमारः ।

**एकपिङ्ग** पु॰एकं नेत्रं पिङ्गमस्य । कुवेरे स हि शाम्भवं गौरीं निरीक्ष्य तच्छापात् नष्टनेत्रो जातः पुनः शिवप्रसादात् तच्चक्षुषः पिङ्गलत्वं जातमिति पुराणकथा । एकपिङ्गलोऽप्यत्र

**एकभक्तव्रत** पु न॰ ‘दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् । एकभक्तमिति प्रोक्तं रात्रौ तन्न कदाचने”त्युक्ते व्रतभेदे ।

**एकयष्टिका** स्त्री॰ एका यष्टिरिवावली यस्याः ब॰ कप् । (एकनर) एकावलीहारभेदे ।

**एकराज्** पु॰ एको राजते क्विप् । सार्व्वभौमे ।

**एकवचन** न॰ वच-ल्युट् ६त॰ । व्याकरणोक्ते एकसंख्यावाचके स्वादौ तिङादौ च । [गवि ।

**एकवर्षिका** स्त्री॰ एको वर्षो वयःकालो यस्याः । एकहायन्यां

**एकविंशति** स्त्री॰ एकाधिका विंशतिः । एकाधिकविंशतिसंख्यायां तद्वति च । एकत्रिंशदादयश्चैवम् । [भेदे च ।

**एकवीर** पु॰ एको वीरः कर्म्म॰ । महावीरे अतिवीरे वृक्ष-

**एकशफ** पु॰एकः शफोऽस्य । एकक्षुरयुक्तेषु खरादिषु “खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा । एते चैकशफा” इत्युक्तेषु पशुषु ।

**एकशेष** पु॰ एकः शेषो यत्र । व्याकरणप्रसिद्धे द्वन्द्वस्थानीये वृत्तिभेदे । यथा घटः घटी इत्यत्र घटौ ।

**एकश्रुति** स्त्री॰एका अभिन्ना उदात्तादिशून्या श्रुतिरुच्चारणम् । प्रातिशाख्ये प्रसिद्धे उदात्तानुदात्तस्वरितानामविभागेनोच्चारणे ।

**एकसर्ग** त्रि॰ एकस्मिन् सर्गो निश्चयो यस्य । अनन्यमनसि एकाग्रचित्ते । [वर्षवयस्कायां गवि ।

**एकहायनी** स्त्री॰ एकोहायनो वयोमानं यस्या ङीप् । एक-

**एकाकिन्** त्रि॰ एक+आकिन् । असहाये ।

**एकाक्ष** पु॰ एकमक्षि यस्य षच् समा॰ । काके । काणे त्रि॰ ।

**एकाग्र** त्रि॰ एकमग्रं विषयो यस्य । विषयान्तरव्यावृत्त्या एकमात्रमनस्के विक्षेपरहितज्ञाने च । स्वार्थे ष्यञ् ऐकाग्र्यमप्यत्र

**एकादश** त्रि॰ एकादशन्+पूरणे डट् । एकादशानां पूरणीभूते । [संख्यायुक्ते ।

**एकादशन्** त्रि॰ एकश्च दश च आत्वम् । एकाधिकदश-

**एकादशद्वार** न॰ एकादश द्वाराणि यत्र । शरीराख्ये पुरे तत्र हि नासिकाश्रोत्रनेत्राणं द्वयं द्वयमिति षट् मुखस्थानि, मुखमेकम्, नाभ्या सह अधःस्थानि त्रीणि, ब्रह्मरन्ध्रञ्चैकमित्यमेकादश द्वाराणि सन्ति ।

**एकादशी** स्त्री॰ एकादशानां पूरणी । उभयपक्षीयप्रतिपदा

दितः एकादशपूरण्यां तिथौ । यत्र हि हरिवासरव्रतम्

**एकाद्नविंशति** स्त्री० एकेन न विंशति एक+नञ् आदुक् । एकोनविंशतिसंख्यायां तद्युक्ते च । एवमेकाद्नत्रिंशदादयः ।

**एकान्त** त्रि० एकः अन्तो निश्चयो यत्र । अत्यन्ते ।

**एकान्ततस्** अव्य० एकान्त+तसिल् । अव्यभिचारिणि ।

**एकान्न** त्रि० एककालमेवान्नं भक्ष्यं यत्र । एकभक्तव्रते ।

**एकान्नविंशति** स्त्री० एकेन न विंशतिः । एक+न+आदुक् दस्य वा न । एकोनविंशतिसंख्यायां, तद्युक्ते च । एवमेकान्नत्रिंशदादयः [गवि ।

**एकाब्दा** स्त्री० एकः अब्दो वयोमानं यस्याः । एकहायन्यां

**एकायन** त्रि० एकमयनं विषयो यस्य । विषयान्तरव्यावृत्तचित्ते एकाग्रमनस्के । कर्म० एकस्थाने । [एकाग्रचित्ते ।

**एकायनगत** त्रि० एकायनमेकविषयं मनोद्वारा गतः ।

**एकावली** स्त्री० एकाटद्वितीया आवली माला मणिश्रेणी । (एकनर) हारभेदे, अर्थालङ्कारभेदे च ।

**एकाश्रय** त्रि० एक आश्रयो यस्य । अनन्यगतिके ।

**एकाष्ठील** पु० एकमस्थि काण्डं तत्तुल्यं लाति ला-क षत्वं दीर्घश्च । वकवृक्षे पाठायां स्त्री० । [पुंस्त्वम् । एकदिने ।

**एकाह** पु० एकमहः द्विगु० अच् । अह्नाहान्ताः पुंसीति

**एकाहगम** त्रि० एकाह्नेन गम्यते गम-घञ् । एकाहगम्ये देशे

**एकाहार** पु० एकस्मिन् दिवसे एक आहारो भोजनम् । एकदिनवृत्त्येकवारभोजने । ब० । तद्वति त्रि० । [एकत्वे

**एकीभाव** पु० अनेकस्य एकस्य भावः एक+च्वि-भू-उप० घञ् ।

**एकीय** त्रि० एक+छ । एकपक्षभवे, एकसम्बन्धिनि च ।

**एकोद्दिष्ट** न० एक उद्दिष्टो यत्र । एकोद्देशेन विहिते श्राद्धे "एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं तदुच्यते" इति स्मृतिः । तच्च प्रेतश्राद्धं तत्तुल्यविधिकं सांवत्सरिकं श्राद्धमिति ।

**एज** कम्पने भ्वादि० आत्म०अक० सेट् । एजते ऐजिष्ट ।

**एज** दीप्तौ भ्वादि० पर०सक० सेट् । एजति ऐजीत् ।

**एठ** बाधने भ्वादि०आत्म०सक० सेट् । एठते ऐठिष्ट ।

**एड** पु० इल-स्वप्ने अच् डस्य लः मेषे । बधिरे त्रि० ।

**एडक** पु० इल-ण्वुल् डस्य लः । वनच्छगले, पृथुशृङ्गे मेषे मेषमात्रे च जातित्वात् स्त्रीत्वे अजादित्वात् टाप् एडका ।

**एडगज** पु० एडो मेषो गजो भक्ष्यत्वादस्य । दद्रुघ्ने (दादमर्द्दन)

**एडमूक** त्रि० श्रुतिरहितएडोबधिरश्चासौ मूकः । वाक्श्रुतिशक्तिरहिते ।

**एडु(डू)क** न० ईड़-(ऊ)उक नि० गुणः । हिंसायाम् । अन्तर्न्यस्तास्थियुक्ते कुड्ये, भित्तौ च ।

**एण** पु० इ-ण तस्य नेत्त्वम् । कृष्णवर्णे मृगे । स्त्रियाम् एणी

**एणतिलक** पु० एणस्तिलकमिव चिह्नं यस्य । मृगाङ्के चन्द्रे ।

**एत** त्रि०पु० इण् तन् । कर्बूरवर्णे । तद्वति त्रि० । स्त्रियामेनी च

**एतद्** त्रि० इण्-अदि तुक् च । पुरोवर्त्तिनि बुद्धिस्थे ।

**एध** वृद्धौ भ्वा० आत्म०अक० सेट् । एधते ऐधिष्ट । [काष्ठे

**एध** पु० इध्यतेऽग्निरनेन इन्ध-करणे घञ् नि० नलोप गुणौ ।

**एधस्** न० इध्यतेऽग्निरनेन इन्ध असि नि० नलोप गुणौ । काष्ठे

**एधित** त्रि० एध-क्त । वृद्धियुक्ते 'मधुसम्वृद्धिसमेधिते'ति माघः ।

**एनस्** न० इण-असुन् नुट् च । पापे, अपराधे च ।

**एरका** स्त्री० इण-रक । निर्ग्रन्थितृणभेदे ।

**एरण्ड** पु० ईरयति वायुम् मलं वा ईर-अण्डच् नि० गुणश्च । वृक्षभेदे (एरंडी) । (भेरण्डा)

**एरण्डपत्रिका** स्त्री० एरण्डस्य पत्रमिव पत्रमस्याः ब० संज्ञायां कन् अत इत्त्वम् । दन्तीवृक्षे ।

**एला** स्त्री० इल-अच् । एलालतायाम् (एलाची) ।

**एलापर्णी** स्त्री० एलायाः पर्णमिव पर्णमस्याः । रास्नायाम् (काटा आमरूल) ।

**ए(ल)लावालुक** न० एलेव वलते वल-उण् संज्ञायां कन् । वा ह्रस्वः । गन्धद्रव्यभेदे ।

**एव** अव्य० इण-वन् । सादृश्ये, अनियोगे, अवधारणे, चारनियोगे, विनिग्रहे, परिभवे ईषदर्थे च । विशेष्यसङ्गतः अन्ययोगव्यवच्छेदे । यथा पार्थ एव धनुर्द्धरः इत्यादौ पार्थान्यपदार्थे प्रशस्तधनुर्द्धरत्वम् व्यवच्छिद्यते । विशेषणसङ्गतः अयोगव्यवच्छेदे. यथा शङ्खः पाण्डर एवेत्यादौ शङ्खे पाण्डरत्वायोगो व्यवच्छिद्यते । क्रियासङ्गतः अत्यन्तायोगव्यवच्छेदे यथा नीलं सरोजं भवत्येवेत्यादौ सरोजे नीलत्वात्यन्तायोगो व्यवच्छिद्यते । गन्तरि त्रि० ।

**एवम्** अव्य० इण्-वम् । सादृश्ये, इत्थंप्रकारे, 'एवंवादिनि देवर्षाविति' कुमारः अवधारणे, स्वीकारे, प्रश्ने च ।

**एष** गतौ भ्वा० आत्म० सक० सेट् । एषते ऐषिष्ट ।

**एषण** पु० एष-ल्यु । लौहमये वाणे । युच् । इच्छायां पुत्रलोकधनकामनायं स्त्री० । ल्युट् । स्वर्णकारादीनां तुलासाधने न० । विस्फोटभेदके अस्त्रभेदे स्त्री० ङीप् । स्वार्थे कन् । एषणिकाप्यत्र ।

## ऐ

**ऐकागारिक** त्रि०एकमसहायमगारं प्रयोजनमस्य ठक् । चौरे

**ऐकाग्र** त्रि०एकाग्र+स्वार्थेष्यञ् । एकाग्रचित्ते अनन्यासक्तचित्ते

**ऐकात्म्य** न॰ एक आत्मा स्वरूपं यस्य तस्य भावः ष्यञ्। ऐक्ये एकस्वरूपत्वे ।

**ऐकान्तिक** त्रि॰ एकान्तं व्याप्नोति ठञ्। अव्यभिचारिणि, अवश्यं भाविनि। स्त्रियां ङीप्। 'ऐकान्तिकी हरेर्भक्तिरुत्पातायैव कल्पते इति पुराणम्।

**ऐकाह्निक** त्रि॰ एकाह्ने भवः कालात् ठञ्। एकदिननिष्पन्ने। एकाहमतोऽस्य भवः। एकाहानन्तरं जायमाने ज्वरे दिने दिने एकसमये जायमाने ज्वरे च पु॰। ऐकाह्निकं ज्वरं हन्ति तस्य नामानुकीर्त्तनमिति ज्वरनाशकमन्त्रः।

**ऐक्य** न॰ एकस्य भावः एक+ष्यञ्। अभेदे एकरूपतायाम्।

**ऐक्षव** त्रि॰ इक्षोर्विकारः इक्षु-अण्। इक्षुविकारे गुड़ादौ। "ऐक्षवं गुडवर्जित"मिति स्मृतिः।

**ऐक्ष्वाक** पु॰ इक्ष्वाकोर्गोत्रापत्यम् अण् नि॰। सूर्य्यवंश्ये नृपे

**ऐङ्गुद** न॰ इङ्गुद्याः फलम् फले अण् तस्य न लुक्। इङ्गुदी वृक्षफले।

**ऐण** त्रि॰ एणस्य कृष्णमृगस्येदम् अण्। कृष्णमृगचर्म्मादौ।

**ऐणेय** त्रि॰ एण्या इदम् ढक्। कृष्णमृगीचर्म्मादौ।

**ऐतिह्य** न॰ इतिह पारम्पर्य्योपदेशः अनिर्द्दिष्टप्रवक्तृकोपदेशइति यावत् स्वार्थे ष्यञ्। पारम्पर्य्योपदेशे। यथात्र वटे यक्षः प्रतिवसतीत्यादि परम्परापदेशमात्रम्। न तु के नाप्येतदुपलभ्य कथितम्।

**ऐन्दव** न॰ इन्दुर्देवताऽस्य। मृगशिरोनक्षत्रे चन्द्रसम्बन्धिनि त्रि॰। सोमराज्याम् स्त्री॰ ङीप्।

**ऐन्द्र** त्रि॰ इन्द्रस्येदम् इन्द्र+अण्। शक्रसम्बन्धिनि। ज्येष्ठां नक्षत्रे न॰। स्त्रियां ङीप्। 'ऐन्द्री तमसुरेश्वर'मिति दुर्गादेवतार्थेऽण्। इन्द्रदेवताके त्रि॰। प्राच्या दिशि स्त्री॰।

**ऐन्द्रजालिक** त्रि॰ इन्द्रजालेन चरति। मायाकारके। (बाजिकर)

**ऐन्द्रि** पु॰ इन्द्रस्यापत्यम् इञ्। इन्द्रपुत्रे, जयन्ते, अर्ज्जुने, सुग्रीववानरे, काके च। [प्रकाश्ये।

**ऐन्द्रियक** त्रि॰ इन्द्रियेण प्रकाश्यः वुञ्। इन्द्रियजन्यप्रत्यक्षेण

**ऐर** न॰ इरा अन्नं तद्विकारः। अन्नमये ब्रह्मलोकस्थे सरसि च।

**ऐरावण** पु॰ इरा सुरा वनमुदकं यत्र पूर्व्वपदादिति णत्वम् तत्र भवः अण्। इन्द्रगजे ऐरावते।

**ऐरावत** पु॰ इरा जलानि सन्त्यस्य इरा+मतुप् मस्य व इरावान् समुद्रस्तत्र भवः अण्। समुद्रजाते इन्द्रगजे।

**ऐरावती** स्त्री॰ इराः सन्त्यस्य मतुप् मस्य वः इरावान् तत्र समुद्रः भवा अण्। विद्युति।

**ऐरिण** न॰ इरिणे ऊषरे भवः। लवणभेदे। (पाङ्गा)।

**ऐरेय** न॰ इरा अन्नम् तत्र भवः ढक्। अन्नभवे मद्ये।

**ऐल** पु॰ इलायाः अपत्यम्। बुधपुत्रे पुरूरवोनामके नृपतौ।

**ऐलविल** पु॰ इलविलाया अपत्यम् अण्। कुवेरे।

**ऐशानी** स्त्री॰ ईशानो देवताऽस्याः। उत्तरपूर्व्वदिशि।

**ऐश्वर्य्य** न॰ ईश्वरस्य भावः। अणिमाद्यष्टविधविभूतिभेदे।

**ऐषमस्** अव्य॰ अस्मिन् वत्सरे नि॰। वर्त्तमानवत्सरे। [जाते

**ऐहलौकिक** त्रि॰ इह लोके भवः ठञ् द्विपदवृद्धिः। इहलोक

**ऐहिक** त्रि॰ इह भवः कालाट्ठञ्। इहलोकभवे गृहीतशरीरसम्बन्धिनि स्रक्चन्दनादिसुखानुभवादौ च।

## ओ

**ओक** पु॰ उच-क नि॰ चस्य कः। पक्षिणि वृषले च।

**ओकस्** न॰ उच-असुन् न्यङ्क्वादित्वात् कुत्वम्। गृहे आश्रयमात्रे च। [(उकुण) केशकीटे।

**ओकोदनी** स्त्री॰ओक आश्रयः मूर्द्धरूपम् अदनं भक्ष्यं यस्याः।

**ओखृ** शोषणे, भूषणे, निवारणे च सक॰ सामर्थ्ये अक॰ भ्वा॰ पर॰ सेट्। ओखति औखीत्। [द्रुतनृत्ये च।

**ओघ** पु॰ उच-घञ् पृषो॰ घ। समूहे, जलवेगे, परम्परायां

**ओङ्कार** पु॰ अव-मन् तस्याकारलोपः, ऊठ् गुणः ओम् ततः स्वरूपे कार। प्रणवे। [औजिजत्-त

**ओज** बले अद॰ चुरा॰ उभ॰अक॰ सेट्। ओजय-ति-ते

**ओजस्** न॰ उब्ज-असुन् बलोपे गुणः। दीप्तौ अवष्टम्भे, प्राणबले, प्रकाशे, सामर्थ्ये, ज्योतिषोक्ते प्रथमतृतीयादौ विषमराशौ, शस्त्रादिकौशले, धातुतेजसि, ज्ञानेन्द्रियाणां पाटवे, काव्यगुणभेदे, गौडरीत्याम्, वैद्यकोक्ते 'भ्रमरैः फलपुष्पेभ्यो यथा सम्भ्रियते मधु। तद्वदोजः शरीरेभ्यो धातुः सम्भ्रियते नृणाम्" इति लक्षणे धातुरसपोषके वस्तुभेदे च। अच्। ओजशब्दोऽप्यत्र।

**ओजिष्ठ** त्रि॰ अतिशयेनोजस्वी ओजस्विन् इष्ठन् मतो लुंक्। अतितेजस्विनि सारतमे च। [(उड़िधान) नीवारे।

**ओडिका** स्त्री॰उ-ड तस्य नेत्त्वम् गौरा॰ङीष् स्वार्थे क ह्रस्वः।

**ओडी** स्त्री॰उ-ड तस्य नेत्त्वम् गौरा॰ङीष्। (उड़ीधान)नीवारे

**ओड्र** पु॰न॰आ+ईषत् उनत्ति उन्द-रक् दस्य डः। जवापुष्पे

**ओड्रपुष्प** पु॰ ओड्रं पुष्पमस्य। जवावृक्षे।

**ओण** अपसारणे भ्वा॰ पर॰सक॰ सेट्। ओणति औणीत्।

**ओत** त्रि॰ आ+वेञ्+क्त। अन्तर्व्याप्तौ 'ओतश्च प्रोतश्चेति' श्रुतिः। पटे दीर्घतन्तौ च।

**ओतु** त्रि॰ अव-तुन् ऊठ् गुणः। बिड़ाले।

**ओदन** पु॰ उन्द्-युच् नलोपो गुणश्च। भक्ते सिद्धान्ने।

**ओदनपाकी** स्त्री॰ ओदनस्य पाक इव पाको यस्याः ङीष्। नीलझिण्टिकायाम् ओषधिभेदे च।

**ओदनी** स्त्री॰ ओदन इवाचरति ओदन+क्विप्-ततः अच् गौरा॰ ङीष्। (वेलेड़ा) बलायाम्।

**ओम्** अव्य॰ अव-मन् तस्यातोलोपः गुणः। प्रणवे, आरम्भे, स्वीकारे, ओमित्युक्तवतोऽथेति माघः। अनुमतौ, अपाकृतौ, अस्वीकारे. मङ्गले, शुभे, ज्ञेये, ब्रह्मणि च।

**ओल** पु॰ आ-उनत्ति आ+उन्द्-क नलोपे पृषो॰ दस्य लत्वम्। स्फूरणे (ओल) इति ख्याते कन्दे। आर्द्रे त्रि॰

**ओलज** क्षेपे इदित् भ्वा॰पर॰सक॰सेट्। ओलञ्जति औलञ्जीत्

**ओलड** क्षेपे वा चुरा॰ उभ॰ पक्षे भ्वादि॰ पर॰सक॰ सेट्। ओलडयति ते ओलडति औलिलडत् त औलडीत्।

**ओष** पु॰ उष-घञ्। दाहे।

**ओषण** पु॰ उष-ल्यु। कटुरसे (झाल) इति ख्याते रसभेदे।

**ओषधि** स्त्री॰ ओषोदाहो धीयतेऽत्र। ओष+धा-कि जातिविषयत्वात् स्त्रीत्वे वा ङीप् ओषधी च। फलपाकान्ते व्रीहियवादौ। [हिमालयपुरे।

**ओषधिप्रस्थ** पु॰ न॰। ओषधिप्रधानः प्रस्थः शाक॰।

**ओषधिपति** पु॰ ६त॰। चन्द्रे। ओषधीशोऽप्यत्र। [कर्पूरे।

**ओष्ठ** पु॰ उष्यते उष्णाहारेण उष-कर्म्मणि ठन्। (ओठ) दशन-

**ओष्ठपुष्प** पु॰ अष्ठोपमानं पुष्पं यस्य। बन्धूकवृक्षे।

**ओष्ठी** स्त्री॰ ओष्ठ इवाचरति ओष्ठ+क्विप् ततः अच् गौरा॰ ङीष्। बिम्बफलनामके (तेलाकुचा) वृक्षे।

**ओष्ठोपमफला** स्त्री॰ ओष्ठ उपमीयतेऽनेन ओष्ठोपमं फलं यस्याः। बिम्बिकालतायाम्।

## औ

**औक्ष** न॰ उक्ष्णां वृषाणां समूहः अण् टिलोपः वृषसमूहे। वुञ्। औक्षकमप्यत्र।

**औख्य** त्रि॰ उखायां पक्वम् ष्यञ्। स्थालीपक्वे मांसादौ।

**औचिती** स्त्री॰ उचितस्य भावः ष्यञ् स्त्रीत्वपक्षे षित्त्वात् ङीष् यलोपः। न्याय्यत्वे सत्यत्वे च।

**औचित्य** न॰ उचितस्य भावः ष्यञ्। उचितस्य भावे न्याय्यत्वे

**औडुम्बर** पु॰ चतुर्द्दशसु यमेषु मध्ये यमभेदे, कुष्ठरोगभेदे च।

**औत्कण्ठ्य** पु॰ उत्कण्ठाया भाव ब्राह्म॰ ष्यञ्। उत्कण्ठायाम्

**औत्तानपादि** पु॰ उत्तानपादस्य नृपभेदस्यापत्यम् इञ्

ऐहिकभोगसाधनकर्म्मान्ते ज्योतिर्मण्डले निश्चलतया तारकारूपेण स्थिते ध्रुवनामके नृपतौ।

**औत्सर्गिक** त्रि॰ उत्सर्गं सामान्यविधिमर्हति ठञ्। सामान्य विधियोग्ये। [क्येन कृतत्वरेति रत्नावली'।

**औत्सुक्य** न॰ उत्सुकस्य भावः ष्यञ्। उत्कण्ठायाम् औत्सु-

**औदनिक** त्रि॰ ओदनः शिल्पमस्य ठञ्। सूपकारे।

**औदरिक** त्रि॰ उदरे प्रसितः ठक्। आद्यूने, (पेटुक) उदर-मात्रपूरणापेक्षके।

**औदश्वित** न॰ उदश्विति अर्द्धजलमथिते तक्रे संस्कृतम् अण्। उदश्वित्संस्कृते द्रव्ये। तत्रार्थे ठकि औदश्वित्कमप्यत्र।

**औदार्य्य** न॰ उदारस्य भावः गुणवचनत्वात् ष्यञ्। उदारतायाम्

**औदासीन्य** न॰ उदासीनस्य भावः ष्यञ्। शुभाशुभयोरुपेक्षायाम् ताटस्थ्ये।

**औदास्य** न॰ उदास्ते उद्+आस-अच् भावार्थे ष्यञ्। वैराग्ये अनुरागशून्यतायाम् मनोयोगविरहे।

**औद्दालक** न॰ 'प्रायो वल्मीकमध्यस्थाः कपिलाः स्वल्पकीटकाः। कुर्व्वन्ति कपिलं स्वल्पं तत् स्यादौद्दालकं मधु' इत्युक्ते मधुनि

**औद्भिद** न॰ 'उद्भिदं पांशुलवणं यज्जातं भूमितः स्वयमि'त्युक्ते पांशुलवणे, 'विदार्य्य भूमिं निम्नां यत् महत्या धारया स्रवेत्। तत्तोयमौद्भिदं नामे'त्युक्तलक्षणे जले च। उद्भिद्य जायते जन-ड उद्भिज्जं ततः स्वार्थेऽण् औद्भिज्जमप्यत्र।

**औद्वाहिक** न॰ उद्वाहकाले लब्धं ठञ्। विवाहकाले लब्ध-धनादौ। 'मैत्रमौद्वाहिकञ्चैवे'ति स्मृतिः।

**औपचारिक** पु॰ उपचार एव विनयादित्वात् स्वार्थे ठक्। उपचारार्थे।

**औपनिषद** पु॰ उपनिषत्स्वेव वेद्यः अण्। वेदान्तमात्रवेद्ये परमात्मनि 'तं त्वौपनिषदं पुरुषमि'ति श्रुतिः।

**औपनीविक** त्रि॰ नीविसमीपे व्याप्तं ठक्। नीविसमीपे व्याप्ते। "औपनीविकमरुन्ध किल स्त्री"ति माघः।

**औपम्य** न॰ उपमैव चतुर्वर्णा॰ स्वार्थे ष्यञ्। सादृश्ये।

**औपयिक** त्रि॰ उप+अय-घञ् उपायस्तेन लब्धः ठक् ह्रस्वश्च। उपायलब्धे, युक्ते न्यायागतवस्तुनि च।

**औपसर्गिक** पु॰ उपसर्गेण निष्पादितः ठञ्। वातादिसन्निपातजाते रोगभेदे।

**औरभ्र** न॰ उरभ्रस्य मेषस्येदम् अण्। मेषादिलोमजाते कम्बले

**औरभ्रक** न॰ उरभ्राणां समूहः वुञ्। मेषसमूहे।

**औरस** पु॰ उरसा निर्म्मितः अण्। 'सवर्णायां संस्कृतायां स्वयमुत्पादयेत्तु यम्। औरसं तं विजानीयादि'त्युक्तलक्षणे पुत्रे।

**और्द्ध्वदैहिक** त्रि० ऊर्द्ध्वो देहः प्रेतदेहः तत्र भवं तस्मै देयं वा श्राद्धादि ठक्। मृतदिनमारभ्य सपिण्डीकरणान्तं क्रियमाणे जलदानश्राद्धादिलक्षणे कर्म्मकलापे। अनुशतादित्वात् द्विपदवृद्धौ और्द्ध्वदैहिकमप्यत्र।

**और्व** पु० उर्वस्यापत्यम् अण्। वाडवानले तस्यौर्वमुनिजातत्वात् तत्स्थानञ्च भूगोलस्य दक्षिणसीमायाम्। उर्व्यां भवः। पांशुलवणे।

**औलूक** न० उलूकानां समूहः अण्। पेचकसमूहे।

**औलूक्य** पु० वैशेषिकदर्शनकारके कणादमुनौ तच्छास्त्रवेत्तरि च।

**औशनस** न० उशनसा शुक्रेण प्रोक्तम् अण्। शुक्रप्रोक्ते उपपुराणादौ दण्डप्रणयनरूपे शास्त्रे च।

**औशीर** न० वश-ईरन् किच्च ततः प्रज्ञाद्यण्। समुदितयोः शय्यापीठयोः।

**औषध** न० ओषधौ भवः अण्। रोगनाशके ओषधिभवे द्रव्ये, रोगहारके द्रव्यमात्रे च।

**औड्र** न० उड्रस्येदम् अण्। उड्रदुग्धादौ।

**औड्रक** न० उड्राणां समूहः वुञ्। उड्रसमूहे। [गौदौ

**औष्ठ्य** त्रि० ओष्ठे भवः यत्। ओष्ठस्थानोच्चार्य्यमाणे उवर्णपव-

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते शब्दस्तोममहानिधौ
स्वरवर्णादिकाः शब्दाः समाप्ताः।

ओंतत्सत्।

---

## क

**क** पु० कै शब्दे कव दीप्तौ. वा ड । ब्रह्मणि,वायौ आत्मनि, यमे दक्षप्रजापतौ सूर्य्ये, अग्नौ विष्णौ,काले कामग्रन्थौ राजनि, मयूरे देहे मनसि, धने,प्रकाशे, शब्दे च। सुखे शिरसि, जले रोगे च न० ।

**कंस** पु० कम-स । उग्रसेनसुते नृपे श्रीकृष्णनाहते । तैजसद्रव्ये, कांस्ये, (त म्रयङ्गमिश्रणजनितधातुद्रव्ये । (कांसा) स्वर्णरजतादिनिर्म्मितपानपात्रे । आढ़क इति प्रसिद्धे परिमाणे च अस्त्री० । पृषो० तालव्यान्त इति केचित् ।

**कंसक** न० कंसादिः कं जलं यस्मात् ५ब० । (हीराकस) इति प्रसिद्धे नेत्रौषधौ तत्संयोगाद्धि अग्निसंयोगेन कंसादिव चक्षुरादितो जलं स्रवति । [जातिभेदे

**कंसकार** पु० कंस+कृ-अण् उप० । (कांसारी) इति प्रसिद्धे

**कंसजित्** पु०कंस+जि-क्विप् ३त०। कंसनृपजयकारिणि श्रीकृष्णे

**कंसहन्** पु० कंस+हन् क्विप् ३त०। कंसदैत्यघातके श्रीकृष्णे ।

**कंसाराति** पु० कंस+अराति ६त० । कंसनृपशत्रौ श्रीकृष्णे ।

**कंसास्थि** न० कंसः अस्थीव उपमितसमासः । शुक्लतयाऽस्थिसदृशे (कांसा) इति प्रसिद्धे धातुभेदे ।

**कक** इच्छायाम् भ्वादि०आत्म०सक०सेट् । ककते । अककिष्ट ।

**कक** गतौ भ्वादि०इदित् आत्म०सक०सेट्। कङ्कते। अकङ्किष्ट ।

**ककुत्स्थ** पु० ककदि असुरवधार्थमिन्द्रेण प्रार्थितः सन् वृषरूपधरस्य इन्द्रस्य ककुदि पृष्ठभागे तिष्ठतीति ककुत्+स्था-क । सूर्य्यवंशीयनृपभेदे यदपत्यतया काकुत्स्थेति संज्ञाभाजः सूर्य्यवंशीया अभवन् ।

**ककुद्** अस्त्री० कं सुखं कौति कुशब्दे क्विप् तुक् च तस्य दः । वृषस्कन्धस्थस्यमांसपिण्डाकारे, (झुंड) इति ख्याते वृषाङ्गे, श्वेतच्छत्रादौ नृपचिह्ने, प्रधाने, पर्व्वताग्रभागे च ।

**ककुद** अस्त्री० कस्य देहस्य सुखस्य वा कुं भूमिं ददाति दा-क। (झुंड) इति ख्याते वृषाङ्गे, प्रधाने, नृपचिह्ने, छत्रादौ, पर्व्वताग्रभागे च ।

**ककुद्मत्** पु० ककुदस्यास्तीति मतुप् झयन्तत्वेऽपि यवादित्वात् न मस्य वः। वृषे, वृषौषधिविशेषे च । ककुदिव मांसपिण्डमस्यास्तीति मतुप् ङीप् । कन्याम् स्त्री० ।

**ककुन्दर** न० कस्य शरीरस्य (पृष्ठदेशस्य) कुं भूमिं दारयतीति ककु-दृ-णिच्-अच् पृषो० । पृष्ठवंशाधःस्थगर्त्ताकारे कूपके

**ककुभ्** स्त्री० कं वातं स्कुभ्नाति स्कुन्भ क्विप् पृषो० । दिशि, शोभायाम्, चम्पकमालायाम्, शास्त्रे, रागिणीभेदे च ।

**ककुभ** पु०कं वातं स्कुभ्नातीति क पृषो०। वीणाङ्गे,स्वरगाम्भीर्य्यसम्पादनार्थमधोबद्धालाबूमयभाण्डे । कस्य वातस्य कुः भूमिः भात्यस्मात् ककु+भा-क । विस्तीर्णशाखत्वात् वातभूमिप्रकाशकेऽर्ज्जुनवृक्षे,रागभेदे च। दिशि,रागिणीभेदे च स्त्री०।

**कक्क** हासे भ्वादि०पर०अक०सेट् । कक्कति । अकक्कीत् ।

**कक्कोल** पु० ककते गच्छतीति क्विप् कक्, कोलति संस्त्यायति अच् कोलः कक् चासौ कोलश्चेति कर्म्म०। गन्धद्रव्यभेदे (कांकोल) इति वङ्गभाषाख्याते वनकपूर. इति पाश्चात्त्ये ख्याते ।

**कक्कोलक** न० इदमर्थे कन् । कक्कोलवृक्षजाते गन्धद्रव्ये वनकपूर इति ख्याते। तस्य कोषे फलवत्त्वात् कोषफल इति प्रसिद्धिः

**कक्ष** पु० कष-हिंसायां स । स्त्रीणाम् उत्तरीयवस्त्रस्य पश्चाद्भागस्थे अञ्चले (आंचल) लतायाम्,शुष्कतृणे,शुष्कवने च । पार्श्वभागे, राजान्तःपुरे, बाहुमूले पृष्ठप्रदेशनिहिताधोऽंशुकस्यैकदेशे (काछा) वस्त्राञ्चले, हस्तिबन्धनरज्ज्वाम्, काञ्चाम्, प्रकोष्ठके, गृहभित्तौ, साम्ये, स्वर्द्धास्पदे कक्षरोगभेदे च (कांकविराली) स्त्री० ।

**कक्षावेक्षक** पु० कक्षं वनसुपवनं साम्यं स्त्रीबाहुमूलं वा कक्षां राजशुद्धान्तं वावेक्षते अव-ईक्ष ण्वुल्। शुद्धान्तपालके, उद्यानपाले,रङ्गाजीवे, कवौ, जारे च । [भद्रमुस्तायाम् ।

**कक्षोत्था** स्त्री० कक्षात् शुष्कतृणात् उत्तिष्ठति उद्+स्था-क ।

**कक्ष्या** स्त्री० कक्षे भवा यत् । बृहतिकायाम् हर्म्यादिप्रकोष्ठे, साहस्ये,वस्त्ररज्ज्वौ, मेखलायाम् गजबन्धनरज्ज्वौ उद्योगे, परार्थबद्धकक्ष्याणां तादृशासुद्भवः कुत इति, उत्तरीय वस्त्रे च । [अकगीत् ।

**कग** क्रियामात्रे भ्वादि०पर०सक०अक०च सेट् । कगति अकगीत्

**कङ्क** पु० ककि गतौ अच् । (कांक) पक्षिभेदे यस्य पक्षेण शरपुङ्खः क्रियते। युधिष्ठिरे च सच्च विराटनगरे तां संज्ञां लेभे।

**कङ्कट** पु० कं देहं कटति क+कट-सम् च्,ककि लौल्ये अटन् वा। कवचे । स्वार्थे कन्। कङ्कटकोऽप्यत्र । [माले च ।

**कङ्कण** न० कं शुभं कणति कम्-कण-अच् । करभूषणे,भूषण-

**कङ्कत** न० ककि-अतच् । केशप्रसाधन्याम् (काकुइ) ।

**कङ्कतिका** स्त्री० ककि-अतच् गौरा० ङीष् स्वार्थे कनि ह्रस्वे टाप् । प्रसाधन्याम् (कांकुइ) नागवलायाञ्च ।

**कङ्कती** स्त्री० ककि-अतच् गौरा० ङीष् । प्रसाधन्याम् ।

**कङ्कलोटि** पु० कङ्कस्य लोटिरिव चञ्चुरस्य । मत्स्यभेदे (काकिला) अच् समा० । कङ्कलोटोऽप्यत्र ।

**कङ्कपत्र** पु० कङ्कस्य पत्रेण पत्रं पक्षोऽस्य । पुङ्खे तत्पत्रयुक्ते शरे

**कङ्कमुख** पु० कङ्कस्य मुखमिव मुखमस्य । (सांड़ाशि) संदंशे

**कङ्काल** पु० कं सुखं शिरो वा कालयति क्षिपति कल-अच् ।
त्वङ्मांसरहितशरीरारम्भकेऽस्थिसञ्चये ।
**कङ्कालमालिन्** पु० कङ्कालानां मालाऽस्त्यस्य इनि । रुद्रे ।
**कङ्गु(ङ्गू)** पु० ककि-उ । (कांङ्नी) धान्यभेदे । पृषो० कस्य गः
कङ्गुरप्यत्र । [तस्य द्वित्वे । कङ्कुनिरप्यत्र ।
**कङ्केल** पु० कङ्क इव ईलति कङ्क+ईल-इ । अशोकवृक्षे । पृषो०
**कच** रवे भ्वा० पर० अक० सेट् । कचति अकचीत् अकाचीत् ।
**कच** बन्धे, द्वेषे च भ्वा० पर० इदित् सक० सेट् । कञ्चति अकञ्चीत्
**कच** बन्धे सक० दीप्तौ अक० भ्वादि० आत्म० सेट् । कचते अकचिष्ट
**कच** पु० कच-अच् । केशे, बृहस्पतिपुत्रे, शुष्कव्रणे, मेघे च ।
हस्तिन्यां स्त्री० । भावे घ । बन्धे शोभायाञ्च ।
**कचाचित** त्रि० कच आचितो विकीर्णो यस्य । विकीर्णकेशे ।
'कचाचितौ विष्वगि'ति भारविः ।
**कचामोद** न० कचमामोदयति आ+मुद-णिच्-अच् । (वाला)
इतिख्याते गन्धद्रव्ये । [नवपत्रिकाङ्गे वृक्षे ।
**कचु** स्त्री० कच-उ । स्वनामख्याते (हरिद्रा मानकं कचुरिति)
**कच्चर** त्रि० कुत्सितं चरति कु-चर-अच् कदादेशः । मलिने । तक्रे न०
**कच्चित्** अव्य० काम्यते इति कम् चीयते निश्चीयते अर्थो यस्मात्
कम्+चि-क्विप् पृषो० मस्य दः । स्वाभिलषितज्ञापनाय-
क्ते प्रश्ने, हर्षे, मङ्गले च ।
**कच्छ** त्रि० कच-बन्धे-छ, केन जलेन छृणाति दीप्यते छृ-ड वा ।
जलप्राये देशे । तटे, पुन्नागद्रुमे, नौकाङ्गे च पु० । परिधा-
नाञ्चले, (काछा) वाराह्याम्, चीरिकायाञ्च (झिल्ली) स्त्री० ।
**कच्छप** पु० कच्छे पिबति पा-क । कूर्म्मे । स्त्रियां जातित्वात्
ङीप् । मल्लयुद्धबन्धभेदे च ।
**कच्छरुहा** स्त्री० कच्छे जलप्रायदेशे रोहति रुह-क । दूर्व्वायाम्
**कच्छुर** त्रि० कच्छूरस्यास्ति र ह्रस्वश्च । कच्छूरोगवति । कुत्सितं
छुरति कु+छुर-क कदादेश । परस्त्रीगामिनि । पुंश्चल्यां स्त्री०
**कच्छू** स्त्री० कचं दीप्तिं छ्यति छो-कू । कण्डूकारके रोगभेदे
**कच्छूघ्नी** स्त्री० कच्छूं हन्ति हन-टक् टित्त्वात् ङीप् । पटो-
ललतायाम् । [(आलकुसी) शट्याम्, गन्धशट्याञ्च ।
**कच्छुरा** स्त्री० कच्छूं राति ददाति रा-क । शूकशिम्ब्याम्
**कच्छोटिका** स्त्री० कच्छया उटिका वेष्टनं वट धात्वर्थनिर्द्देशे
वुञ् संप्रसारणञ्च । कच्छावेष्टने । अर्श आद्यचि स्त्रीत्वात्
टाप् कच्छवेष्टनयुक्तायां शाट्याम् ।
**कज** रोहे (सौत्रः) इदित् पर० अक० सेट् । कञ्जति अकञ्जीत् ।
**कज्जल** न० कुत्सितमीषिका जलं नेत्रस्य यस्मात् कोः कद् ।
अञ्जने । तद्वर्णत्वात् मेघे पु० । मत्स्यभेदे स्त्री० टाप् ।
**कज्जलरोचक** पु० न० कज्जलं रोचयति रुच-णिच्-अच् ।
दीपाधारे (पिलसुच) । इति वङ्गभाषायां प्रसिद्धे ।
**कञ्चिका** स्त्री० कचि ण्वुल् । वंशशाखायाम् (कञ्ची) ।
**कञ्चुक** पु० कचि-उकन् । योधादेः चोलाकृतौ सन्नाहे लौह-
वर्म्मणि, निर्म्मोके (खोलस) स्त्रीणां चूलिकायां वस्त्रे च ।
**कञ्चुकिन्** पु० कञ्चुक+इनि । राज्ञामन्तःपुराधिकारिणि द्वार-
पाले, सर्पे जारे, यवे, चणके च । आवद्धकवचे त्रि० ।
**कञ्चुलिका** स्त्री० कचि-उल गौरा० ङीष् स्वार्थे कन् ह्रस्वे टाप् ।
स्त्रीणां कूर्पासवस्त्रे (कांचलो) कनभावे । कञ्चुलीत्यप्यत्र ।
**कञ्ज** पु० कमित्यव्ययं जलादिवाचि तस्मिन् जले मूर्ध्नि वा
जायते जन-ड । पद्मे, केशे, कारणजले क्षिप्तवीजजातत्वात्
चतुरानने च । [तस्य कृष्णवर्णत्वेन केशतुल्यत्वात् ।
**कञ्जक** पु० कञ्जः केश इव कायति कै-क । (मयना) पक्षिभेदे
**कञ्जार** पु० कं जलं जारयति जृ-अण् । सूर्य्ये, ब्रह्मणि च ।
उदरे न० । अचि । कञ्जरोऽप्यत्र ।
**कट** गतौ भ्वादि० पर० सक० सेट् । कटति अकटीत् अकाटीत् ।
**कट** गतौ भ्वा० इदित् पर० सक० सेट् । कण्टति अकण्टीत् ।
**कट** गतौ भ्वा० पर० सक० सेट् । कटति अकटीत् अकाटीत् कट्टः
**कट** वृतौ वर्षणे च भ्वादि० पर० सक० सेट् । कटति अकटीत् ।
**कट** पु० कट-अच् कर्म्मणि घ वा । हस्तिगण्डस्थले, कटिपार्श्वे,
नडादिरचिते आसने (मादुर)(दडमा) । अतिशये, काले,
तृणे, शवे, शवरथे, ओषधौ, श्मशाने च ) क्रिया-
कारके त्रि० । [कटुरोहिण्याम् । कटुंवराप्यत्र ।
**कटंवरा** स्त्री० कटं वृणोति कट्+वृ-खच् मुम् च् । (कटकी)
**कटक** अस्त्री० कट-वुन् । मेखलाख्ये पर्व्वतमध्यभागे, बाहु-
भूषणे वलये, हस्तिदन्तमण्डले, चक्रे, सामुद्रलवणे, राजधा-
न्याम्, सेनायाञ्च । [कामरूपिणि राक्षसे च ।
**कटप्रू** पु० कटं प्रवते प्रु-क्विप् दीर्घश्च । महादेवे, विद्याधरे,
**कट(टि)प्रोथ** प्रोथ-अच् कटस्य (कट्या वा) प्रोथो मांसपिण्डः ।
स्फिचि कटिदेशस्थमांसपिण्डे, कट्याञ्च ।
**कटभङ्ग** पु० भन्ज-घञ् ६त० । सैन्यभङ्गद्वारा राजविनाशे,
धान्यानां हस्तच्छेदने च । [लतायाम्, अपराजितायाञ्च ।
**कटभी** स्त्री० कट इव भाति-ड गौरा० ङीष् । ज्योतिष्मती-
**कटम्भरा** स्त्री० कटं बिभर्त्ति भृ, खच् मुम् च् । (गन्धभादाल)
राजवलायाम् । श्योनाकवृक्षे पु० ।
**कटशर्करा** स्त्री० कथ्यते आश्रियते कटं फलं तत् शर्करा
खर्परेव यस्याः (लाटा) गाङ्गेष्टीलतायाम् ।
**कटाक्ष** पु० कटं गण्डं अक्षति व्याप्नोति अच् । अपाङ्गदृष्टौ ।

**कटायन** न० कटस्य तृणासनस्यायनमुत्पत्तिस्थानम्। वीरणमूले
**कटाह** पु० कटमाहन्ति आ-हन-ड। महिषीशिशौ, तैलादेः
पाकसाधनपात्रे, खर्परे, नरके च।
**कटि(टी)** स्त्री० कट-इन्। श्रोणिदेशे (काकाल)। कृदिकारा-
न्तत्वात् वा ङीप्। [वर्त्मनि च।
**कटित्र** न० कटिं त्रायते त्रै-क। काञ्च्याम्, कटिवस्त्रे, कटि-
**कटिल्ल** पु० कट-इल्ल। कारवेल्ले (करेला)।
**कटिसूत्र** न० कटौ धार्य्यं सूत्रं शाक०। कटिधार्य्ये कार्पास-
रचिते धातुमये वा सूत्रे (घुनसी गोट)। [बद्धो धार्य्यते
**कटीतल** पु०कट्यां तलमास्पदमस्य। वक्रखड्गे यतोऽसौ कटिदेशे
**कटोर** पु० कट-ईरन्। जघने, कन्दरे, च। कट्यां न०।
संज्ञायां कन् नितम्बे। तद्वत, तीक्ष्णे, मत्सरिणि च त्रि०
**कटु** न० कट-उ। दूषणे, दुष्कार्य्ये, रसभेदे (झाल) तद्वति त्रि०।
चम्पके, चीनकर्पूरे, पटोले, कटुकीलतायाञ्च स्त्री०वा ङीप्।
**कटुक** पु० कटु स्वार्थे संज्ञायां वा कन्। पटोले, सुगन्धितृणे,
अर्कवृक्षे, (आकन्द) कुटजवृक्षे, (कुरची) राजसर्षपे, (राइ
सरषा) शुण्ठीपिप्पलीमरिचरूपे त्रिकटुनि न०। [लशुने च
**कटुकन्द** पु० कटुः कन्दो मूलं यस्य। शिग्रुवृक्षे (सजना) आर्द्रके,
**कटुकफल** पु० कटुकं फलमस्य। कक्कोले।
**कटुका** स्त्री० कटु+संज्ञायां कन्। (कट्की) कटुरोहिण्याम्,
ताम्बूल्यां, राजिकायां, (राइसरषा) तिक्तालाबुके च (तितलाउ)
**कटुकी** स्त्री०कटु+स्वार्थे कन् गौरा०ङीष्। (कट्की) कटुकायाम्
**कटुकीटक** पु० कटुः कीटः स्वार्थे कन्। मशके। [पक्षिणि।
**कटुक्वाण** पु० कटुस्तीक्ष्णः क्वाणो यस्य। (तितिर) टिट्टिभ-
**कटुग्रन्थि** पु०न०। कटुर्ग्रन्थिरस्य। पिप्पलीमूले, शुण्ठीमूले च
**कटुच्छद** पु० कटुः छदः पत्रं यस्य। तगरवृक्षे (टगर)
**कटुतिक्तक** पु० कटुश्चासौ तिक्तश्चेति अल्पार्थे कन्। भूनिम्बे,
शणवृक्षे च कटुतुम्ब्याम् स्त्री०। टाप् अत इत्वम्।
**कटुतुम्बी** स्त्री० कर्म०। (तितलाउ) लताभेदे। कटु तुण्डं
मुखमस्याः ङीप् कटुतुण्डीत्यप्यत्र। [त्रिकमप्यत्र।
**कटुत्रय** न० कटूनां त्रयम्। शुण्ठीपिप्पलीमरिचानां त्रये। कटु-
**कटुदला** स्त्री० कटु दलं यस्याः। (कांकुड़) कर्कट्याम्।
**कटुफल** पु० कटु फलं यस्य। पटोले। श्रीवल्लीवृक्षे स्त्री०।
**कटुभङ्ग** पु० कटुः भङ्ग एकदेशो यस्य। शुण्ठ्याम्। कटुरपि
भद्रः हितकारी कर्म्म० कटुभद्रोऽप्यत्र।
**कटुमञ्जरिका** स्त्री० कटुर्मञ्जरी यस्याः। अपामार्गे।
**कटुर** न० कटुं विपाके कटुरसं राति रा-क। तक्रे।
**कटुरस** पु० कटुस्तीक्ष्णो रसो ध्वनिर्यस्य। भेके।

**कटुरोहिणी** स्त्री० कटुः सती रोहति णिनि। कटुकायाम्
**कटुवार्त्ताकी** स्त्री० कर्म०। श्वेतकण्टकारिकायाम्।
**कटुवीजा** स्त्री० कटुवीजं यस्याः। पिप्पल्याम्।
**कटुस्नेह** पु० कटुः स्नेहः तैलादिरूपो निर्यासो यस्य। सर्षपे
**कट्टार** पु०कटी-क्त कट्टमावरणम् ऋच्छति ऋ-अण्। (काटार)
अस्त्रभेदे। ऋ-ण्वुल् कट्टारकोऽप्यत्र।
**कट्फल** पु० कट-क्विप् कट् फलं यस्य। (कायफल) श्रीपर्णी-
वृक्षे गाम्भार्य्याम्, (गामार) वृहत्याम्, काकमाच्याम्, वार्त्ताक्याञ्च
**कट्वर** न० कट-ष्वरन्। तक्रे, दधिसरे, व्यञ्जने च।
**कट्वी** स्त्री० कटु+गुणवचनत्वात् ङीष्। (कट्की) कटुकायाम्।
**कठ** आध्याने (उत्कण्ठापूर्व्वकस्मरणे) वा चुरा० उभ० पक्षे
भ्वा० पर० सक० सेट् इदित्। कण्ठयति ते कण्ठति।
अचकण्ठत् त अकण्ठीत्। [अकाठीत्।
**कठ** कृच्छ्रजीवने भ्वादि० पर० अक० सेट्। कठति अकठीत्
**कठ** आध्याने उत्कण्ठापूर्व्वकस्मृतौ इदित् भ्वा० आत्म० सक०
सेट्। प्रायेणोत्पूर्व्वः। उत्कण्ठते उदकण्ठिष्ट। [तरि च।
**कठ** पु० कठ-अच्। मुनिभेदे ऋग्वेदीयशाखायाम् तच्छाखाध्ये-
**कठाकु** पु० कठ काकु। पक्षिभेदे।
**कठिञ्जर** पु० कठ-इन् कठिं कठिनं जरयति जृ+णिच् अच्।
पृषो० मुम् च। तुलस्याम् पलाशवृक्षे वर्व्वूरायाञ्च। [स्त्री०
**कठिन** त्रि०कठ-इनच्। क्रूरे, निष्ठुरे, कठोरे, स्तब्धे च स्थाल्याम्
**कठिनपृष्ठ** पु० कठिनं पृष्ठमस्य। कच्छपे।
**कठिनी** स्त्री० कठिन+गौरा० ङीष्। वर्णलेखनसाधने द्रव्ये।
खठिकायाम्। 'कठिनीः चिनोती'ति नैषधम् स्वार्थे कन्
अत्रैवार्थे। [लाञ्छनच्छविरिति माघः।
**कठोर** त्रि० कठ-ओरन्। कठिने, पूर्णे च। कठोरताराधिप-
**कड** भेदने रक्षणे च चुरा० इदित् उभ०सक० सेट्। कण्ड-
यति ते अचकण्डत् त। [ण्डीत् अकण्डिष्ट।
**कड** हर्षे भ्वा० उदित् उभ० सक० सेट्। कण्डति ते अक-
**कड** भक्षणे तुदा०पर०सक०सेट्। कडति अकाडीत् अकडीत्।
**कडक** न० कड-अच् संज्ञायाम् कन्। (करकच्) लवणभेदे।
**कडङ्गर** न० कडं गिरति गृणाति वा अच् नि० मुम्।
माषमुद्गादिकाष्ठे (आगडा) वुसे।
**कडङ्गरीय** त्रि० कडङ्गरमर्हति। वुसभक्षणयोग्ये गवादौ।
**कडम्ब** पु० कड-अम्बच्। शाकनाड़िकायाम्, (डांट) कोणे,
प्रान्तभागे च।
**कडम्बी** स्त्री० कडम्बो भूयसा विद्यतेऽस्याः अर्श आद्यचि
गौरा०ङीष्। (कलमी) शाकभेदे तस्याः कडम्बभूयस्त्वात्।

कडार पु० गड-सेचने आरन् गस्य कादेशः । पिङ्गलवर्णे । तद्वति त्रि० । करभकण्टकडारभाषा इति माघः ।

कड्ड कार्कश्ये भ्वा० पर० अक० सेट् । कड्डति अकड्डीत् ।

कण आर्त्तस्वरे भ्वा० पर० अक० सेट् । कणति अकाणीत् अकणीत् । णिचि अचीकणत् त अचकाणत् त । [यति ते

कण गतौ भ्वा०पर०सक०सेट् । कणति अका(क)णीत् । णिचि कणा-

कणा पु० कण-निमीलने अच् । धान्यादेरतिसूक्ष्मांशे, लेशे च गौरा० ङीष् वनजीरके स्त्री० । अल्पार्थे टप् । क्षुद्रांशे, जीरके पिप्पल्याम्, श्वेतजीरके च । [कणत् अचकाणत् त

कण निमीलने चुरा० उभ०अक०सेट् । काणयति ते । अची-

कणजीरक न० कर्म० । क्षुद्रजीरके ।

कणभक्ष पु० भक्ष-अण् उप० । श्यामचटके कणादेमुनौ 'कणभक्षपक्षानुसारिणा मिति प्रकाशिका । ण्वुल् कणभक्षकोऽप्यत्र

कणिक पु० कणो विद्यतेऽस्य अस्त्यर्थे ठन् । गोधूमचूर्णे,(मयदा) अतिसूक्ष्मांशे, अग्निमन्थवृक्षे च स्त्री० ।

कणित न० कण आर्त्तस्वरे क्त । पीडितानां शब्दे ।

कणिश न० कणो विद्यतेऽस्य इनि कणी तं श्यति शो-क । शस्यमञ्जर्यां धान्यादिशीर्षे च ।

कणीयस् त्रि० कण+ईयसु । अत्यन्ताल्पे ।

कणे अव्य० कण-के । अभिलाषातिशये ।

कणेर पु० कण-एर । कर्णिकारवृक्षे । वेश्यायां,हस्तिन्याञ्च स्त्री०

कण्टक पु०न० कटि ण्वुल् । सूच्यग्रे, क्षुद्रशत्रौ, रोमाञ्चे, मत्स्याद्यस्थ्नि द्रुमाङ्गे (कांटा) 'लग्नाच्चतुर्थास्तकर्म्माणि केन्द्र-संज्ञञ्च कण्टकमि'ति ज्योतिषोक्ते लग्ने, ततः चतुर्थसप्त-मदशमस्थानेषु च । [(शिमुल) ।

कण्टकद्रुम पु० मध्य०कण्टकाचितो द्रुमः शाक० । शाल्मलीवृक्षे

कण्टकप्रावृता स्त्री० ३त० । घृतकुमार्याम् ।

कण्टकफल पु० कण्टकाचितं फलं यस्य । पनसवृक्षे (कांटाल) कण्टकिफलोऽप्यत्र । [वेगुण) तस्याहन्ते कण्टकाचितत्वात्

कण्टकवृन्ताकी स्त्री० कण्टकाचिता वृन्ताकी । वार्त्ताक्याम्

कण्टकश्रेणी स्त्री० कण्टकानां श्रेणी यत्र । कण्टकार्याम् ।

कण्टकारिका स्त्री० कण्टकान् इयर्त्ति कण्टक+ऋ-ण्वुल् स्वनामख्याते वृक्षे । फलेऽणि लुक् हरितक्यादित्वात् स्त्री०

कण्टकारी स्त्री० कण्टक+ऋ-अण् । वृहत्याम् । फलेऽणि तस्य लुक् हरितक्यादित्वात् स्त्री० ।

कण्टकाशन पु० कण्टकमश्नाति अश-ल्यु । उष्ट्रे ।

कण्टकित त्रि० कण्टको रोमाञ्चो जातोऽस्य इतच् । जात-पुलके 'प्रीतिकण्टकितत्वच' इति कुमारः ।

कण्टकिन् पु० कण्टक+इनि । मत्स्यभेदे, खर्ज्जूरवृक्षे विक-ङ्कतवृक्षे (वइची) गोक्षुरे, खदिरवृक्षे, वदरवृक्षे, वंशभेदे, (वेड़ वांश) । वार्त्ताक्यां, क्षीरभिण्ट्याञ्च स्त्री० ।

कण्टकिल पु० कण्टक+इलच् । (वेड़वांश) । वंशभेदे । [याम्

कण्टकिलता स्त्री० कण्टकिनी लता कर्म० । (शशा) त्रपुषीलता

कण्टकी स्त्री० कण्टक+अर्शआदित्वादच् गौरा० ङीष् । वार्त्ताकीभेदे । [वृहत्याम् ।

कण्टतनु स्त्री० कटि-अच् कण्टा कण्टकान्विता तनुर्यस्याः ।

कण्टदला स्त्री० कटि-अच् कण्टं दलं यस्याः । केतक्याम् ।

कण्टपत्र पु० कण्टं कण्टकान्वितं पत्रं यस्य । विकङ्कतवृक्षे ।

कण्टपत्रफला स्त्री० कण्टं कण्टकान्वितं पत्रं फलञ्च यस्याः । ब्रह्मदण्ड्याम् । [ङ्कतवृक्षे । (वइची)

कण्टपाद पु० कण्टः कण्टकान्वितः पादो मूलं यस्य । विक-

कण्टफल पु० कण्टं कण्टकान्वितं फलं यस्याः । गोक्षुरे, पनसे, धुस्तूरे, लताकरञ्जे, एरण्डभेदे च ।

कण्टल पु० कण्ट+मत्वर्थीयो लच् । वावुले (वावला)

कण्टवल्ली स्त्री० कण्टा कण्टकान्विता वल्ली कर्म० । श्रीवल्लीवृक्षे

कण्टार्त्तगला स्त्री० कण्ट० आर्त्तगला कर्म० । नीलझिण्ट्याम्

कण्टालु पु० कटि+आलु । वृहत्यां, वंशभेदे, वार्त्ताक्याञ्च ।

कण्ठ पु० कण-ठ तस्य नेत्वम् कठि-अच् वा । ग्रीवापुरोभागे, मदनवृक्षे, समीपे, होमकुण्डाद्बहिर्द्व्यङ्गुलिमितस्थाने च ।

कण्ठतलासिका स्त्री० कण्ठतले अश्वकण्ठस्वरूपस्थाने आस्ते आस-ण्वुल् । अश्वग्रीवावेष्टकचर्म्मादौ ।

कण्ठाग्नि पु० कण्ठे अग्निः पाकाग्निर्यस्य । पक्षिणि, तस्य कण्ठाधःकरणमात्रेणैवान्नादेः पाकाद्याप्राप्तिमत्वात् कण्ठा-ग्नित्वम् । [अरित्रे च । जले,गोणीभेदे च स्त्री० ।

कण्ठाल पु० कठि-आलच् । शूरणे (ओल) युद्धे,उष्ट्रे,नौकाङ्गे,

कण्ठिका स्त्री० कठि-ण्वुल् । (एकनरा) कण्ठाभरणभेदे ।

कण्ठी स्त्री० क्षुद्रः कण्ठः अल्पार्थे ङीप् । अश्वकण्ठवेष्टनरज्वाम्

कण्ठीरव पु० कण्ठात् रवो यस्य । सिंहे, मत्तगजे, कपोते च

कण्ठेकाल पु० कण्ठे कालः सप्तम्याः अलुक् । महादेवे ।

कण्डन न० कडि-ल्युट् । मुषलादिना तण्डुलादेर्निस्तुषता सम्पादने (कांडान) । [कण्डनी चोदकुम्भश्चे'ति मनुः ।

कण्डनी स्त्री० कण्ड्यतेऽनेन कडि-ल्युट् । मूषले उदूखले च

कण्डिका स्त्री० कडि-ण्वुल् । वेदैकदेशे ।

कण्डु स्त्री० कडि-उ । गात्रघर्षणे,तत्कारके रोगे च (चुलकान) ।

कण्डु(ण्डू)र पु० कण्डुं, कण्डूं वा राति रा-क । कारवेल्ल-लतायाम् (करेला) शूकशिम्ब्याम्.(आलकुशी) स्त्री० ।

**कण्डू** स्त्री० कण्डूञ् गात्रविघर्षणे संपदादित्वात् क्विप्। कण्डूयने गात्रघर्षणे। 'कपोलकण्डू'मिति कुमारः।

**कण्डूकरी** स्त्री० कृ-टक् उप०। शूकशिम्ब्याम् (आलकुशी)।

**कण्डूघ्न** पु० कण्डू-हन-टक्। आरग्वधे, गौरसर्षपे च।

**कण्डूति** स्त्री० कण्डूय-क्तिन्। कण्डूयने गात्रघर्षणे।

**कण्डूयन** स्त्री० कण्डू-यक् ल्युट्। कण्डूाम् गात्रघर्षणे।

**कण्डूया** स्त्री०कण्डू यक् कण्डूय-अ-स्त्रीत्वात् टाप्। कण्डूम्

**कण्डूल** पु० कण्डू+लच्। कण्डूकारके शूरणे। कण्डूयुते त्रि०

**कण्डोल** पु० कडि-ओल। वंशादिरचिते धान्यस्थापनपात्रे। (डोल) उष्ट्रे च। [पोका)

**कण्डूोघ** पु० कण्डूनामोघो यस्मात् ५व०। शूककीटे (शूया-

**कण्व** पु० कण-वन्। मुनिभेदे। पापे न०।

**कतक** पु०तक-हासे कस्य जलस्य तकी हासः प्रकाशो यस्मात्। ५व०(निर्मालि) वृक्षभेदे। यस्य फलसम्पर्कात् जलप्रसादः

**कतम** त्रि० किम्+डतमच्। बहूनां मध्ये एकस्य जातिप्रश्नेऽर्थे डतमच्। बहूनां मध्ये एकस्मिन् ज्ञातविशिष्टे विशेषधर्म-ज्ञानाय प्रष्टे। द्वयोर्मध्ये तथार्थे डतरच्। कतरः।

**कति** त्रि० किम्+डति। संख्याभेदपरिज्ञानाय प्रष्टे।

**कतिपय** त्रि०कति+अयच् पुक् च। कतिशब्दार्थे।

**कत्तृण** कुत्सितं तृणं कोः कदादेशः। पृश्नौ (चाकुलिया) कुम्भिकायां (पाना) सुगन्धितृणे च।

**कत्तोयं** न० कुत्सितमीषद्वा तोयं यत्र। मद्ये।

**कत्थ** श्लाघायां भ्वा०आत्म०अक० सेट्। कत्थते अकत्थिष्ट।

**कत्र** शैथिल्ये अद०चुरा०उभ०अक० सेट्। कत्रयति ते अचकत्रत् त। [अचीकथत् त अचकथत् त।

**कथ** वाक्यरचनायां अद०चुरा०उभ०सक० सेट्। कथयति ते

**कथक** त्रि० कथ-ण्वुल्। तत्त्वनिर्णयार्थं वादरूपकथाकर्त्तरि, कथोपजीविनि नाटकवर्णनकर्त्तरि च। [रमनालम्बे'ति माघः

**कथङ्कारस्** अव्य०कथम्+कृ-णमुल्। कथं कृत्वेत्यर्थे। 'कथङ्का-

**कथञ्चन** अव्य० कथम्+चन। केनांशेनेत्यर्थे।

**कथञ्चित्** अव्य० कथम्+चित्। कथञ्चनार्थे अतियत्नेनेत्यर्थे च प्राणान् कथञ्चिदपि धारयितुमिति रसमञ्जरी।

**कथम्** अव्य० किम्+प्रकारार्थे थमु कादेशः। केन प्रकारेणेत्यर्थे

**कथमपि** अव्य०कथम् च अपि च द्व०। अतियत्नेनेत्यर्थे अतिगौरवेणेत्यर्थे च। [थमु। २त०। किंप्रकारप्राप्ते।

**कथम्भूत** त्रि० कं प्रकारं भूतः प्राप्तः किम्+द्वितीयान्तादपि

**कथा** स्त्री० कथ-अ। कथने, 'प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः। परम्पराश्रया या स्यात् सा मताख्यायिका बुधैरित्युक्तलक्षणे वाक्ये प्रबन्धरचनायां कादम्बर्यादिग्रन्थे, पक्षप्रतिपक्षोपन्यासेन विचारणायां, वादरूपे वाक्ये च।

**कथाप्रसङ्ग** पु० कथायां प्रसङ्गो यस्य। वावदूके। गोष्ठीवचने वातूले, विषवैद्ये 'कथाप्रसङ्गेन जनैरुदीरितादि'ति भारविः

**कद** रोदने, वैक्लव्ये अक० आह्वाने सक० भ्वा० इदित् पर० सेट्। कन्दति अकन्दीत्। [अकादिष्ट। णिच्-कदयति ते।

**कद** विह्वलीभावे दिवा० आत्म० अक० सेट् घटादि। कद्यते

**कदध्वन्** पु०कुत्सितोऽध्वा कदादेशः गति०। कुपथे। [ल्युट्। युद्धे

**कदन** न० कद-णिच्-ल्युट्। पापे, मर्द्दने,मारणे च। आधारे

**कदम्ब** पु० कद-अम्बच्। स्वनामख्याते वृक्षे। सर्षपे देवताड़वृक्षे। समूहे च न०। स्वार्थे कन्। संघे न०।

**कदम्बगोलकन्याय** पु० कदम्बपुष्पस्य गोलके यथा सर्व्वावयवेषु युगपत्पुष्पाणामुत्पत्तिस्तादृशे एकदोत्पत्तौ दृष्टान्तभेदे

**कदर** पु० कं जलं दृणाति पचाद्यच्। श्वेतखदिरे (काटाबाव-ला) वृक्षभेदे च। [क्त। विडम्बिते, दूषिते च।

**कदर्थित** त्रि० कुत्सितोऽर्थः कदर्थस्तत् करोतीति णिच्-कर्म्मणि

**कदर्य्य** त्रि०कुत्सितोऽर्य्यः स्वामी कुगति०। सति विभवे अदातरि, क्षुद्रे। 'आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पातयन्। यो लोभात् सञ्चिनोत्यर्थान् स कदर्य्य इति स्मृत' इत्युक्तलक्षणेऽर्थसञ्चयकारके च।

**कदल** पु० कद-कलच्। रम्भावृक्षे। अजादित्वात् टाप्। पृश्नी लतायां (चाकुलिया) शाल्मलीवृक्षे च। [पताकायां,मृगभेदे च

**कदली** स्त्री०काय दल्यते त्वगादौ जलबाहुल्यात्। रम्भावृक्षे,

**कदलीकुसुम** न० ६त०। (मोचा) कदलीपुष्पे।

**कदलीदण्ड** पु०६त०। कदलीमध्यस्थे दण्डाकारे पदार्थे (थोड़)

**कदा** अव्य०कस्मिन् काले किम्+दा कादेशः। कस्मिन् काले इत्यर्थे

**कदाख्य** पु० कुत्सिता आख्या यस्य कदादेशः। (कुड़) वृक्षे

**कदाचन** अव्य०कदा+चन। अनिर्द्धारिते कस्मिंश्चित् कालेऽर्थे चित्। कदाचित् अव्य० कदा+चित् कदाचनार्थे कदापीत्यर्थे च। [तद्वति त्रि०।

**कदुष्ण** न०कुत्सितम् ईषदुष्णं कोः कदादेशः। ईषदुष्णे स्पर्शे।

**कद्रु** पु० कद-रु। पिङ्गलवर्णे। तद्वति त्रि० नागमातरि स्त्री०।

**कद्रू** स्त्री० कद्रु+संज्ञायामूङ्। नागमातरि कश्यपपत्न्याम्।

**कद्रु(द्रू)पुत्र** पु० ६त०। सर्पे। कद्रु(द्रू) सुतादयोऽप्यत्रार्थे।

**कद्वद** त्रि० कुत्सितं वदति कु+वद्-अच् कदादेशः। गर्हितवाक्यवादिनि। [अकानीत्

**कन** प्रीतौ अक० गतौ सक० भ्वा०पर० सेट्। कनति अकनीत्

**कनक** न० कन-वुन्। स्वर्णे,किंशुकवृक्षे,कृष्णकुसुमे-धुस्तूरे धुस्तूरे च

**कनकक्षार** पु० कनकस्य तद्द्रावणाय क्षारः । (सोहागा) टङ्गे तत्सम्पर्कात् हि झटिति कनक द्रवति ।

**कनकच्छत्र** न० कनकदण्डं छत्रं यस्य शाक० । राजच्छत्रे ।

**कनकप्रसवा** स्त्री० कनकमिव प्रसवः पुष्पं यस्याः । स्वर्णकेतक्याम् ।

**कनकरस** पु० कनकमिव रसो यस्य । हरिताले ।

**कनकलोद्भव** पु० कनतीति कना दीप्ता कला अवयवः तया उद्भवति उद्+भू-अच् । (धूना) सालनिर्य्यासे ।

**कनकाचल** पु० कर्म० । सुमेरुपर्व्वते, धान्य चलादिषु दशसु दानीयपर्व्वतेषु मध्ये दानीये स्वर्णपर्व्वते च ।

**कनकाध्यक्ष** पु० ७त० । सुवर्णरक्षणादावधिकृते ।

**कनकारक** पु० कनकं दीप्तं यथा तथा ऋच्छति सर्व्वतो व्याप्नोति कृ-ण्वुन् । कोविदारवृक्षे ।

**कनकालुका** स्त्री० कनकनिर्म्मिता आलुः संज्ञायां कन् । भृङ्गारे (झारी) सौवर्णकलसे च ।

**कनखल** पु० तीर्थभेदे ।

**कनिष्ठ** त्रि० अयमेषामतिशयेन अल्पो युवा वा इष्टन् कनादेशः । अतियूनि अत्यल्पे अनुजे च । अनुजायां सर्व्वाभ्यः क्षुद्राङ्गुलौ च स्त्री० टाप् । कनिष्ठभ्रातुः पत्न्यामपि अजादित्वात् टावेव ।

**कनी** स्त्री० कन-अच् गौरा० ङीष् । दुहितरि ।

**कनीनिका** स्त्री० कन-ईन संज्ञायां कन् टाप् अत इत्त्वम् । अक्षितारायां, कनिष्ठाङ्गुलौ च ।

**कनीयस्** त्रि० अयमनयोरतिशयेन युवा अल्पो वा ईयसु कनादेशः । द्वयोर्मध्ये अल्पतरे.युवतरे,अनुजे च। स्त्रियां ङीप् ।

**कनीयस** न० कनी दीप्तिः तस्मै यस्यति यस-अच् । ताम्रे ।

**कन्तु** पु०कम-तु । कामदेवे । हृदये न०। कं सुखमस्तीति कम्+अस्त्यर्थे तु । सुखवति त्रि०। [वस्त्रखण्डे। (कांथा)

**कन्था** स्त्री० कम-थन् । स्यूतयभितौ (कांथ) सूत्रग्रथितजीर्ण-

**कन्थारी** स्त्री० अतिकण्टक वृतत्वात् कन्थामपि ऋच्छति वेधनेन प्रविशति ऋ-अण् । दुष्प्रवेशाख्ये वृक्षे ।

**कन्द** पु०न०कन्दति कन्दयति कन्द्यते वा कदि-अच् णिच् अच्, घञ् वा । सूरणे (ओल) शस्यमात्रमूले, गृञ्जने च (गाजर) मेघे पु० । [(सुथ्नी) इति ख्याते कन्दे च ।

**कन्दगुडूची** स्त्री० कन्दोद्भवा गुडुची शाक० । गुडुचीभेदे,

**कन्दट** न० कदि-अटन् । श्वेतोत्पले । [(उच्छा)

**कन्दफला** स्त्री० कन्दात् फलं यस्याः । क्षुद्रकारवेल्लायाम् ।

**कन्दर** पु० स्त्री० कम् जलेन दीर्य्यते कम्+दृ-अच् । गुहाकारे गिरिनितम्बदेशे गुहायाम्, स्त्रीत्वे टाप् ङीप् च। अङ्कुशे पु० । आर्द्रके न० ।

**कन्दराकर** पु० ६त० । पर्व्वते ।

**कन्दराल** पु० कन्दरा+अस्त्यर्थे लच् । गर्दभाण्डवृक्षे प्लक्षवृक्षे (पाकुड़) आखोट वृक्षे च । [पाषाणभेदीवृक्षे ।

**कन्दरोद्भवा** स्त्री० कन्दरे उद्भवति उद्+भू-अच् । क्षुद्र-

**कन्दर्प** पु० कम् सुखं तेन तत्र वा दृप्यति कम्+दृप+अच्, कम् कुत्सितो दर्पोऽस्मात् वा । कामदेवे ।

**कन्दर्पकूप** पु० कन्दर्पस्य कूप इव । स्त्रीचिह्नभेदे ।

**कन्दर्पजीव** पु० कन्दर्पं जीवयति उद्दीपयति जीव णिच् अण् । कामवर्द्धननामकवृक्षे ।

**कन्दर्पमुषल** पु० कन्दर्पस्य मूषल इव । पुरुषचिह्नभेदे ।

**कन्दल** न०कदि-कलच् । कपाले नवाङ्कुरे. करध्वनौ अपवादे, कन्दलीलतापुष्पे च । कनके, युद्धे कलापे च पु० ।

**कन्दली** स्त्री०कन्दे लीयते ली-ड,कदि-कलच् वा गौरा०ङीष् । मृगभेदे गुल्मभेदे, पताकायाम्, पद्मवीजे, भूमिकदल्याञ्च ।

**कन्दलीकुसुम** न० ६०त० । भूमिकदलीपुष्पे, छत्राके च

**कन्दवर्द्धन** पु० कन्देन वर्द्धते वृध-ल्यु । सूरणे (ओल)

**कन्दवल्ली** स्त्री० कन्दादारभ्य वल्ली । बन्ध्यकर्कोट्याम् ।

**कन्दशूरण** पु० कन्दप्रधानः सूरणः शाक० (ओल) सूरणे

**कन्दु** पु०स्त्री० स्कन्द उ सलोपः । (ताओया) स्वेदनीपात्रे कन्दुपक्वं तैलपक्वमिति स्मृतिः तण्डुलादेः भर्ज्जनपात्रमात्रे च गोकुले कन्दुशालायामिति स्मृतिः । [ति कुमारः ।

**कन्दुक** पु० कदि-उक । गेन्दुके 'सा कन्दुकैः कृत्रिमपुत्रकैश्चे'

**कन्दुपक्व** त्रि० जलोपसेकं विना कन्दुपात्रे पक्वं तण्डुलादि । शुष्कतया भ्रष्टतण्डुलादौ।कन्दुपक्वानि तैलेनेत्यादिस्मृतिः

**कन्दोट** पु० कदि-ओटन् । श्वेतोत्पले । नीलोत्पले न० ।

**कन्दोत** पु० कन्दे मूले उतः वेञ्-क्त । कुमुदे ।

**कन्धर** पु० कम् जलम् धारयति धरः । मेघे । कम् शिरस्तस्य धरा। ग्रीवायाम् स्त्री० ।

**कन्धि** पु० कम् शिरो धीयतेऽस्मिन् कम्+धा-कि । ग्रीवायाम् ।

**कन्न** न० कद-क्त । पातके, मूर्च्छायाञ्च ।

**कन्यका** स्त्री० अज्ञाता कन्या कन्दा+अज्ञातार्थे कन् क्षिपकादित्वात् नेत्त्वम् । 'कन्यका दशमे प्रोक्तेति स्मृत्युक्तायां दशवर्षीयां कुमार्य्याम् ।

**कन्या** स्त्री० कन-यत् कन्यायाः कनीन् चेति निर्द्देशात् वयसि प्रथम इति न ङीप् । अनूढ़ायां कुमार्य्याम्, मेषादितः षष्ठे राशौ च ।

**कान्याकुब्ज** पु० कन्याः कुब्जा यत्र । कान्यकुब्जदेशे तत्र हि वायुना कन्याशतस्य कुब्जत्वं कृतमि'ति रामायणकथा ।

**कन्याट** पु० कन्या अटत्यत्र घञ् । वासभवने ।

**कप** चलने (सौत्रः) पर०अक०सेट् । कपति अकपीत् अकापीत्

**कप** चलने भ्वादि० इदित् आत्म०अक०सेट् । कम्पते अकम्पिष्ट

**कपट** पु०न० के मूर्द्धनि अपि पट इवाच्छादकः । अन्यथास्थितस्य वस्तुनोऽन्यथात्वेनाच्छादने ।

**कपटिन्** त्रि० कपट+इनि । छलयुक्ते । चीनानामगन्धद्रव्ये पु० ।

**कपर्द्द** पु० पर्व्व पूरणे क्विप् रात् वलोपे पर् पर्त्तिः कस्य गङ्गाजलस्य परा पूर्त्या दायति शुध्यति क+पर्+दैप्-क । हरजटायाम् । केन सुखेन पूर्त्तिं ददाति दा-क । वराटके अल्पार्थे कन् स्त्रीत्वे टाप् अत इत्त्वम् । कपर्द्दिकाप्यत्र ।

**कपर्द्दिन्** पु० कपर्द्द+अस्त्यर्थे इनि । महादेवे ।

**कपाट** स्त्री० न० कं वातं पाटयति वहिर्गमयति पट णिच् अण् । द्वारावरणेन वातरोधके स्वनामख्याते काष्ठादौ । अणन्तत्वात् स्त्रियां ङीप् । कपाटीत्यप्यत्र ।

**कपाल** पु०न० कं जलं पालयति अण् । घटादेरवयवे शिरोऽस्थ्नि, यतीनां भिक्षापात्रे, कर्परे च । सौत्रकप-कालन् । समूहे, कुष्ठरोगभेदे च ।

**कपालभृत्** पु० कपालं ब्रह्मणः शिरोऽस्थिमयं पात्रं बिभर्त्ति भृ-क्विप् । शिवे । [शिवे । दुर्गायां स्त्री० ङीप् ।

**कपालमालिन्** पु० कपालानां माला विद्यतेऽस्य इनि ।

**कपालिका** स्त्री० क्षुद्रं कपालमल्पार्थे कन् अत इत्त्वम् । भग्नमृण्मयखण्डे (खापरा) । [त । तद्वति त्रि० ।

**कपि** पु० सौत्र कप-इ । वानरे, रक्तचन्दने, वराहे, कपिलवर्णे

**कपिकच्छू** स्त्री० कपीनामपि कच्छूः यस्याः ५ब० । (आल्कुशी) कपिकण्डूहेतौ शूकशिम्ब्याम् ।

**कपिका** स्त्री० कप-वुन् । नीलसिन्धुवारवृक्षे ।

**कपिकेतन** पु० कपिः केतनं ध्वजरूपं चिह्नं यस्य । अर्ज्जुने कपिध्वजोऽप्यत्र । [तथात्वात्

**कपिचूड़ा** स्त्री० कपीनां चूडेव । आम्रातवृक्षे तस्य तकुलेन

**कपिचूत** पु० कपीनां चूत इव प्रियः । आम्रातकवृक्षे ।

**कपिज** पु० कं जलमिव पिञ्जते वर्ण्यते पिजि-क नलोपः । (शिलारस) सिह्लके ।

**कपिञ्जल** पु० कमिव पिञ्जते पिजि-कलच् । गौरतित्तिरौ, चातके च 'कपिञ्जलानालभेते'ति श्रुतिः ।

**कपित्थ** पु० कपिस्तिष्ठत्यत्र तत्फलप्रियत्वात् स्था-क पृषो० । (कएतबेल) वृक्षभेदे कपित्थवदराशन' इति भागवतम् ।

**कपित्थत्वक** पु० कपित्थस्य त्वगिव त्वक् वल्कलमस्य । एलवालुकवृक्षे

**कपित्थास्य** पु० कपित्थमिवास्यं यस्य । गोलाङ्गूलाख्ये वानरभेदे

**कपिप्रभा** स्त्री० कपावपि प्रभा स्वगुणप्रकाशोऽस्याः । (आलकुशी) कपिकच्छ्वाम् ।

**कपिप्रिय** पु० ६त० । आम्रातकवृक्षे कपित्थे च ।

**कपिरथ** पु० कपिः हनुमान् रथइव वाहनम् यस्य । रामचन्द्रे कपीरथे यस्य । अर्ज्जुने ।

**कपिल** पु० कव-इलच् पादेशः । अग्नौ, वासुदेवे, सांख्यशास्त्रकारके मुनिभेदे, स च कर्द्दमप्रजापतितो देवहूत्यां भगवदंशेन जातः । कुक्कुरे, दानवभेदे, पिङ्गलवर्णे च तद्वति त्रि० । स्वर्णवर्णायां गवि, नदीभेदे, रक्तपुष्पयोगात् शिंशपायां पुण्डरीकनामदिग्गजकरिण्याञ्च स्त्री० ।

**कपिलधारा** स्त्री० कपिलेव शुद्धा धारा यस्याः । गङ्गायां स्वर्गनद्याम् । कपिलानां धारा दुग्धधारा यत्र । काश्यां प्रसिद्धे तन्नामकतीर्थे ।

**कपिलशिंशपा** स्त्री० कर्म्म० । पीतपुष्पयुतायां शिंशपायाम् ।

**कपिलाक्षी** स्त्री० कपिलमक्षिवत् पुष्पमस्याः । पीतपुष्पायां शिंशपायाम् । [इन्द्रे ।

**कपिलाश्व** पु० कपिलरूपेणाश्वहरणात् कपिलवर्णाश्वयोगाच्च

**कपिलोमफला** स्त्री० कपिलोमन्यपि फलं कण्डूयनमस्याः । (आलकुशी) दुरालभायाम् ।

**कपिलोह** न० कपितुल्यं पिङ्गलं लोहं धातुः । पित्तले ।

**कपिवक्त्र** पु० कपेर्वक्त्रमिव वक्त्रमस्य । नारदे तस्य शापकृतकपितुल्यास्यत्वं पुराणे प्रसिद्धम् । [आम्रातकवृक्षे ।

**कपिवदान्य** पु० कपिषु वदान्यो बहुफलवत्त्वेन तत्प्रदानात् ।

**कपिवल्ली** स्त्री० कपिरिव तल्लोमतुल्या वल्ली । गजपिप्पल्याम्

**कपिश** पु० कपिः कपिलवर्णोऽस्यास्ति अस्त्यर्थे श । (शिलारस) सिह्लके । कृष्णपीतमिश्रे वर्णे च । तद्वति त्रि० । नदीभेदे, कपिशां तीर्त्त्वेति रघुः । माधव्यां लतायाञ्च स्त्री० ।

**कपिशी** स्त्री० कपिश+गौरा० ङीष् । माधव्याम् मदिराभेदे च

**कपिशीर्ष** न० कपीनां प्रियं शीर्षमग्रम् शाक० । प्राकाराग्रे ।

**कपिशीर्षक** न० कपेः शीर्षमिव कायति कै+क । हिङ्गुले ।

**कपीज्य** पु० कपिभिरिज्यते यज-क्यप् । क्षीरिकवृक्षे ।

**कपीतन** पु० कपीनाम् ईं लक्ष्मीं तनोति तन-अच् । आम्रातकवृक्षे, शिरीषवृक्षे च ।

**कपीन्द्र** पु० कपिरिन्द्र इव । हनुमति । कपीनामिन्द्रः । सुग्रीवे ।

**कपीष्ट** पु० कपीनामिष्टः । राजादाने कपित्थे च ।

**कपूय** त्रि० कुत्सितं पूयते पूयी-विसरणे अच् पृषो० उलोपः ।

लक्षणशालिनि मुनिविशेषे, सैन्यवर्गाध्यक्षे च।

**कुलपर्व्वत** पु० कौ पृथिव्यां लीयते ली-ड कर्म्म०। ‘महेन्द्रो मलयः सह्यः शुक्तिमान्ऋक्षपर्व्वतः। विन्ध्यश्च पारिपा(या)त्रश्च सप्ते ते कुलपर्व्वता इत्युक्तेषु महेन्द्रादिषु पर्व्वतेषु। कुलाचलादयोऽप्यत्र।

**कुलपालक** न० कुलं पालयति पाल-ण्वुल्। (कमलानेबु) नारङ्गभेदे। वंशपालके त्रि०। [सत्यां स्त्रियाम्

**कुलस्त्री** स्त्री० कुलस्यैव स्त्री नान्यगामिनी। कुलरक्षिकायां

**कुलाचार** ६त०। कुलोचिते धर्म्मे ‘जीवः प्रकृतितत्त्वञ्च दिक्कालाकाशमेव च। क्षित्यप्तेजोवायवश्च कुलमित्यभिधीयते। ब्रह्मबुद्ध्या निर्विकल्पमेतेष्वाचरणञ्च यत्। कुलाचारः स एवोक्त इत्युक्तरूपे ज्ञाने च।

**कुलाय** पु० कुलं पक्षिसंघातोऽयतेऽत्र अय-घञ्। पक्षिनिलये-नीडे, स्थानमात्रे च। कौ लायो गतिरस्मात्। देहे न०।

**कुलायिका** स्त्री० कुलायः पक्षिवासस्थानं विद्यतेऽस्यां ठन्। पक्षिशालायां (चिड़ियाखाना)।

**कुलाल** पु० कुल-कालन्, कुलमलति अल-अण्, कुलमालाति आ+ला-क वा। कुम्भकारे, (कुमार) कुक्कुभपक्षिणि च।

**कुलाली** स्त्री० कुलमलति अल-अण्। नीलोत्पलभेदे, अञ्जनभेदे, अरण्यकुलत्थिकायाम्, कुम्भकारभार्य्यायाञ्च।

**कुलाह** पु० कुलमाहन्ति आ+हन-ड। ईषत् पीतवर्णे कृष्णजानौ अश्वे। ततः संज्ञायां कन्। कृकलासे, (राङ्गाकुखे (खाड़ा) इति ख्याते शाकभेदे च।

**कुलाहल** पु० कुलमाहलति स्पर्द्धते अच्। (कुकरशोङ्गा) वृक्षभेदे

**कुलि** पु० कुल-इन्। हस्ते। कण्टकार्य्यां स्त्री० वा ङीप्।

**कुलिक** पु० कुल+अस्त्यर्थे ठन्। अष्टनागान्तर्गतनागभेदे, (कुलेखाडा) इति ख्याते शाके, ज्योतिषोक्ते रव्यादिवारे वेलाभेदे च। कुलश्रेष्ठे त्रि०।

**कुलिङ्ग** पु० कौ पृथिव्यां लिङ्गति चरणार्थं गच्छति अच्। चटके, धूम्याटे, (फिङ्गा) भूमिप्रत्यासन्नतया धान्यादिचारिणि खगे च। कुत्सितलिङ्गे न०। ब०। तद्वति त्रि०। स्वार्थे कन् चटके। ङीप् कर्कटशृङ्ग्याम्। [मेटिकावृक्षे।

**कुलिङ्गाक्षी** स्त्री०कुलिङ्गमक्षि फलमस्याः षच् समा०। (मेटारी)

**कुलिन्** पु० कुल+अस्त्यर्थे इनि। पर्व्वते। सत्कुलवति त्रि०।

**कुलि(ली)र** पु० कुल-इरक् ईरक् वा। कर्कटे (कांकड़ा) मेषावधिके चतुर्थे राशौ च।

**कुलिश** पु० न० कुलौ हस्ते शेते शी-ड, कुलिनं पर्व्वतं श्यति शो-ड वा। वज्रे। कौ लिशति श्लिष्यति लिश-क। अस्थिसंहारवृक्षे, मत्स्यभेदे च। [भगिन्याञ्च।

**कुली** स्त्री० कौ लीयते ली-ड ङीप्। कण्टकार्य्यां, पत्न्या ज्येष्ठ

**कुलीन** पु० कुले आकरे भवः ख। श्रेष्ठहये। तन्त्रोक्ते कुलाचारवति, सत्कुलोद्भवे च त्रि०।

**कुलीनक** पु० कौ भूमौ लीनः ली-क्त संज्ञायां कन्। वनमुद्गे

**कुल्माष** पु० कोलति कुल-क्विप् कुल् माषोऽस्मिन् ७ब०। ‘अर्द्धस्विन्नाश्च गोधूमा अन्ये च चणकादयः। कुल्माष इति कथ्यन्ते इत्युक्तेषु अर्द्धस्विन्नगोधूमादिषु ‘स हि कुल्माषान् खादन्तं बिभिक्षे इति श्रुतिः सूर्य्यस्य पारिपार्श्विकभेदे, शूकधान्ये यवादौ च। काञ्जिके मसीपरिणामे च न०।

**कुल्य** न० कुल-संस्त्याने क्यप्। अस्थ्नि, अष्टद्रोणीरूपपरिमाणे, शूर्पे, आमिषे च। कुले भवः, कुलाय हितो वा यत्। सत्कुलोद्भवे कुलहिते च त्रि०। कुल-क्यप् टाप्। कृत्रिमायामल्पनद्याम्, जीवन्त्यामोषधौ, कुलस्त्रियां, स्थूलवार्त्ताकौ च स्त्री० [उत्पले च।

**कुव** न० कुं भूमिं वाति गच्छति वा क। जलजे, पुष्पमात्रे,

**कुवङ्ग** न० कुत्सितं वङ्गम्। सीसके (सीसा) धातुभेदे।

**कुवल** न० कौ वलते वल संचलने अच्। उत्पले, मुक्ताफले च। कोलिवृक्षे स्त्री० ङीप्। वदरीफले न०।

**कुवलय** न० कोर्वलयमिव शोभाहेतुत्वात्। उत्पले, श्वेतोत्पले नीलोत्पले च, ‘कुवलयदलश्यामविस्तीर्णदृष्टे’ इत्युद्भवदूतम्।

**कुवलयापीड** त्रि० कुवलयमापीडा भूषणं यस्य। नीलोत्पलभूषणवति जने। कंसासुरस्य हस्तिरूपधारिणि दैत्यभेदे पु०।

**कुवाद** त्रि० कुत्सितं वदति अण्। कपरदोषकथनशीले। भावे घञ् कुग०। कुत्सितवाक्ये।

**कुविन्द** पु० कुं भूमिं विन्दति विद-श। तन्तुवाये शूद्रीगर्भे विश्वकर्म्मणो जाते वर्णभेदे च (तांति)।

**कुवृत्तिकृत्** पु० कोः पृथ्व्याः वृत्तिं वेष्टनं करोति कृ-क्विप्। (कांटाकरञ्जा) ख्याते वृक्षे। कुत्सितवृत्तिकर्त्तरि त्रि०।

**कुवेणि(णी)** स्त्री०कुत्सितं वेणन्ते मत्स्या अस्याम् वेण-इन्, वा ङीप्। मत्स्यधान्याम् (खालुइ)।

**कुश** पु०न०कौ शेते शी-कुं पापं श्यति शो-वा ड कुश्यति कुश-क वा। स्वनामख्याते तृणे। कुशोऽक्ष्टगर्भके दयनि रामसुते च ‘रिपुनागाङ्कुशं कुश’मिति रघुः। योक्त्रे, घृतसमुद्रेणावृते द्वीपभेदे च पु०। जले न०।

**कुश** द्युतौ इदित् भ्वादि०पर०सक० सेट्। कुंशति अकुंशीत्।

**कुश** श्लेषे दि० पर०सक०सेट्। कुश्यति। अकुशत्-अकोशीत्।

**कुशध्वज** पु० जनकस्य नृपस्यानुजे भ्रातरि।

कुशपुष्प न० कुशाकारं पुष्पमस्य । ग्रन्थिपर्णी वृक्षे ।

कुशल न० कुश-कलन् । कल्याणे । तद्वति त्रि० । कुशान् लाति ला क । दक्षे त्रि० । कौ पृथिव्यां शलति चलयति कार्य्याणि शल-अच् । कार्य्यचतुरे त्रि० ।

कुशलिन् त्रि० कुशल+अस्त्यर्थे इनि । कल्याणवति । "कुशलिनी वत्सस्य वार्त्तापी"ति साहि० ।

कुशस्थल न० ६त० । कान्यकुब्जदेश । द्वारकायां स्त्री०ङीप् ।

कुशा स्त्री० कुश-क । वल्गायां, रज्ज्वां, मधुकर्कट्यां, सामगानां स्तोत्रगानार्थेष्वौडुम्बरशङ्कुषु च ।

कुशाकर पु० कुशैराकीर्य्यते समन्तादग्रेण मूलाच्छादनेन वेष्ट्यते आ+कॄ अप् । यज्ञाग्नौ । स हि कुशकण्डिकायां कुशैराव्रियते ।

कुशाग्रीय त्रि० कुशाग्रमिव कृ । अतिसूक्ष्मे ।

कुशाल्मलि पु० कुत्सितः शाल्मलिः । रोहितकवृक्षे ।

कुशावती स्त्री० कुश-अस्त्यर्थे मतुप् मस्य वः दीर्घः । रामात्मजकुशस्य राजधान्याम् पुर्य्याम् ।

कुशिक पु० कुश+अस्त्यर्थे ठन् । जमदग्निपितरि, विश्वामित्रस्य पितरि च मुनिभेदे । कुश+इवार्थे इकन् । काशे, सर्जवृक्षे, विभीतकवृक्षे, अश्वकर्णवृक्षे, तैलशेषे च । कोकरे(ठेरा) त्रि०

कुशी स्त्री० कुश-अयोविकारेऽर्थे ङीप् नि० । लौहविकारे फाले

कुशीलव पु० कुत्सितं शीलं कुगति० अस्त्यर्थे व, कुशीलं वाति वा-क वा । कीर्त्तिसञ्चारके नटे, चारणे, गायके च । कुशीलवद्वत्तिनाश्रमप्रचारकत्वात् वाल्मीकौ मुनौ ।

कुशीलव पु० द्वि० व० । कुशस्य लवस्य द्व० नि० । रामपुत्रयोः ।

कुशूल पु० कुश-ऊलच् । तुषाग्नौ, अन्नकोष्ठके, इष्टकादिनिर्म्मिते धान्यादिस्थापनार्हे स्थाने च ।

कुशूलधान्यक पु० कुशूलपरिमितं धान्यं यस्य । यावता धान्येन वर्षत्रयं स्वस्य स्वकुटुम्बस्य स्वभृत्यस्य निर्वाहो भवति तावन्मात्रसञ्चितधान्ये विप्रे । [कर्णिकारवृक्षे च ।

कुशेशय न० कुशे जले शेते शी-अच् अलुक् । पद्मे, सारसपक्षिणि,

कुष निष्कर्षे क्र्यादि० पर० सक० सेट् । कुष्णाति अकोषीत् । निरस्तु वेट् निरकोषीत् निरक्षत् ।

कुषाकु पु० कुष्णाति कुष-काकु । वानरे, सूर्य्ये, वह्नौ च । परोत्तापिनि त्रि० । [(कुठ) रोगभेदे च ।

कुष्ठ न० कुष्णाति रोगम् देहं वा कुष-क्थन् । (कुड) विषभेदे

कुष्ठगन्धि न० कुष्ठस्येव (कुड़) गन्धोऽस्य इत् समा० । एलवालुके

कुष्ठगन्धिनी स्त्री० कुष्ठस्य गन्धोऽस्त्यस्याः इनि । अश्वगन्धायाम्

कुष्ठघ्नी स्त्री० कुष्ठं हन्ति हन क ङीप् । काकोडुम्बरिकायाम्

कुष्ठनाशन पु० कुष्ठं नाशयति नश-णिच्-ल्यु । वाराहीकन्दे, गौरसर्षपे, शिरीषवृक्षे च । [सोमराज्याम् ।

कुष्ठनाशिनी स्त्री० कुष्ठं नाशयति नश-णिच् णिनि ङीप् ।

कुष्ठल न० कुत्सितं स्थलम् अम्बष्ठादित्वात् षत्वम् । कुत्सितस्थले

कुष्ठसूदन पु० कुष्ठं सूदयति सूद-ल्यु । आरग्वधे (सोन्दाल)

कुष्ठहन्तृ पु० कुष्ठं हन्ति हन-तृच् । हस्तिकन्दे (हातिकान्दा)

कुष्ठहृत् पु० कुष्ठं हरति हृ-क्विप् तुक् च । (विट्खदिरे) ।

कुष्ठारि पु० ६त० । विट्खदिरे, पटोले, गन्धके च ।

कुष्ठिन् त्रि० कुष्ठ+अस्त्यर्थे इनि । कुष्ठरोगयुक्ते ।

कुष्माण्ड पु० ईषत् उष्मा पित्तहेतुत्वात् अण्डेषु बीजेषु यस्य शक० । (कुमड़ा) ख्याते वृक्षे, शिवस्य गणदेवताभेदे च । जातित्वात् स्त्रियां ङीप् कुष्माण्डीत्यप्यत्र लताभेदे ऋग्वेदप्रसिद्धेषु ऋग्विशेषेषु कुष्माण्डीं पावमानीश्चैविकृतिः स्वार्थे कन् कुष्माण्डकोपि (कुमड़ा) वृक्षे ओषधौ, उमायां, कर्कारौ च ।

कुस श्लेषे दिवा० पर० सक० सेट् । कुस्यति अकुसत्-अकोसीत्

कुसित पु० कुस-क्त । जनपदभेदे । ईषच्छुभ्रे पु० । तद्वति त्रि० ।

कुसीद न० 'कुत्सितात् सीदतश्चैव निर्विशङ्कैन रह्यते । चतुर्गुणं वाष्टगुणं कुसीदाख्यं ततः स्मृत'मित्युक्ते वृद्धिभेदे (सुद) अर्थप्रयोगे, वृद्धि(सुद) जीविकायाम् 'स्यान्नलाभनिमित्तं यत् दानग्रहणमिष्यते । तत् कुसीदमिति प्रोक्त'मित्युक्ते स्यानस्य मूलधनस्य यथावस्थित्यै, ततोलाभाय चोत्तमर्णाधमर्णाभ्यां दत्ते, गृहीते च धने । अर्शआदित्वादच् । तत् प्रयोगकर्त्तरि त्रि० ।

कुसीदिक त्रि० कुसीदाय वृद्ध्यै प्रयच्छति कुसीद+ठन् । वृद्ध्याजीविनि वार्द्धुषिके । स्त्रियां षित्त्वात् ङीष् ।

कुसुम न० कुस-उमक् । पुष्पे, फले, स्त्रीरजसि, नेत्ररोगभेदे च

कुसुमपुर न० (पाटना) इति ख्याते पाटलिपुत्रे नगरे, पृषो० अन्तलोपे कुसुमपत्र ।

कुसुममध्य पु० कुसुमं मध्ये फलमध्ये यस्य । (चावदा) वृक्षभेदे । [मिति गीता ।

कुसुमाकर पु० ६त० । वसन्ते ऋतौ "विद्धि मां कुसुमाकर"

कुसुमागम पु० कुसुमानामागमो यत्र काले । वसन्ते ऋतौ ।

कुसुमाञ्जन न० कुसुमाकारमञ्जनं शाक० । पैत्तलमलजाते पुष्पाकारे अञ्जनभेदे । [स्वीत्मनैव पुष्पाकारत्वम् ।

कुसुमात्मक न० कुसुममेवात्मा स्वरूपं यस्य । कुङ्कुमे तस्य

कुसुमाधिप पु० कुसुमेषु कुसुमप्रधानेषु वृक्षेषु अधिपः श्रेष्ठः सुगन्धित्वात् । चम्पकवृक्षे

**कुसुमायुध** पु० कुसुममायुधमस्य । कामदेवे । [मद्ये च ।
**कुसुमासव** न० कुसुमस्य तद्रसस्यासवम् । पौष्पे मधुनि, तज्जाते
**कुसुमेषु** पु० कुसुमानीषवो यस्य । कामदेवे । [पुष्पसमूहे ।
**कुसुमोच्चय** पु० कुसुमानामुच्चयः समूहो यत्र । स्तवके । ६त०
**कुसुम्भ** न० कुस-उम्भ । पुष्पप्रधानवृक्षे (कुसुम) "कुसुम्भं नालिकाशाकं वार्त्ताकुमिति स्मृतिः । स्वार्थे क कमण्डलौ ।
**कुसृति** स्त्री० कुत्सिता सृतिः सृ-क्तिन् । शाठ्ये ।
**कुस्तुभ** पु० कु भूमिम् ईषद्वा स्तुभ्नाति स्तुन्भ-अच् नलोपः नि० । विष्णौ, समुद्रे च ।
**कुस्तुम्बुरु** न० कुत्सितं तुम्बति तुबि-मर्द्दने उरु नि०-सुट् । धन्याके
**कुस्म(स्म)** कुत्सितस्मये दर्शने च चुरा० आत्म० सक० सेट् । कुस्म(स्म)यति अचुकुस्म(स्म)त । [अचुकुहत ।
**कुह** विस्मापने अद० चुरा० आत्म० सक० सेट् । कुहयते
**कुह** अव्य० किम्+ह-कु तिहोरिति आदेशः । कुत्रेत्यस्मिन्नर्थे
**कुहक** न० कुह-ण्वुल् । इन्द्रजालमायया अन्यथास्थितस्य वस्तुनोऽन्यथादर्शने । तद्युक्ते त्रि० ।
**कुहन** न० ईषत् यत्नेन हन्यते हन-कर्म्मणि अच् । मृद्भाण्डे ईषद् यत्नेन हन्ति कर्त्तरि अच् । सर्पे, चौरे च । कुं भूमिं हन्ति खनति अच् । मूषिके । कुह-युच् टाप् । दम्भ-चर्यायां स्त्री० । ईर्ष्यालौ त्रि० ।
**कुहर** पु० कुं हरति हृ-अच् । नागभेदे । कुहं विस्मापनं राति रा-क । छिद्रे । कर्णे, कण्ठे कण्ठशब्दे, समीपे च न० ।
**कुहलि** पु० कुत्सितं हलति हल-इन् । ताम्बूल्याम् (पान)
**कुहा** स्त्री० कुह-अच् । कुज्झटिकायां, कटुक्याञ्च ।
**कुहु(हू)** स्त्री० कुह-कु-वा ऊङ् । नष्टेन्दुकलायां चतुर्द्दशी-युतायाममावस्यायां, कोकिलालापे च 'त्वमपि चन्द्रविरोधि कुहूरव' इति 'उन्नहूरिति कुहूरवध्वनिभिदे'ति चोद्भटः ।
**कुहूकण्ठ** पु० कुहूरितिशब्दः कण्ठे यस्य । कोकिले ।
**कुहूरव** पु० कुहूरिति रवो यस्य । कोकिले । कुहूशब्दादयोऽप्यत्र
**कुहेलिका** स्त्री० कुत्सितं हेलयति ण्वुल् । कुज्झटिकायाम् ।
**कू** आर्त्तस्वरे तुदा० आत्म० अक० सेट् कुटादि । कुवते अकुविष्ट
**कू** शब्दे क्र्यादि० उभ० अक० सेट् प्वादि० । कुनाति कुनीते अकवीत् अकविष्ट ।
**कूकुद** पु० सत्कृत्यालङ्कृतकन्यादातरि ।
**कूचिका** स्त्री० कू-चिक् संज्ञायां कन् । तूलिकायाम् । कनभावे वा ङीप् । कूचीत्यप्यत्र ।
**कूज** शब्दे भ्वा० पर० सक० सेट् । कूजति अकूजीत् ।
**कूजित** न० कूज-क्त । पक्षिशब्दे अव्यक्तशब्दे च 'मधुकरनिकरकरम्बितकूजित कुञ्जकुटीरे' इति जयदेवः ।
**कूट** पु० कूट-अच् कर्म्मणि घञ् वा । अगस्त्यमुनौ । गृहे पु० स्त्री० । निश्चले, धान्यादिराशौ, अयोघने (नेहार) लौह-मुद्गरे, दम्भे, मायायां, यथार्थवस्त्वाच्छादने, अद्रिशृङ्गे, तुच्छे, फालाधारे-लाङ्गलाङ्गे, मूर्खे मृगबन्धनहेतौ-यन्त्रे, भग्नशृङ्गखण्डे, पुरद्वारि च पु० । स्वार्थे कन् फाले । संज्ञायां कन् । कवर्य्याम्, कुरानामगन्धद्रव्ये च पु० ।
**कूट** अपवादे दानाभावे च चुरा० आत्म० सक० सेट् । कूटयते अचुकूटत्-त । [कूटयति ते अचुकूटत्-त ।
**कूट** दाहे मन्त्रणे प्रच्छादने च अद० चुरा० उभय० सक० सेट्
**कूटकार्षापण** पु० कर्म्म० । मिथ्याभूतरौप्यादिमुद्रायाम्
**कूटकृत्** पु० कूटं मिथ्याभूतं करोति कृ-क्विप् तुक् च । कायस्थे । कितवे त्रि० । कलसादिपाकस्थाने (पोयान) ।
**कूटपालक** पु० कूटं मृत्तिकास्तूपं पालयति ण्वुल् । कुलाले ।
**कूटयन्त्र** न० कूटेन कृतं यन्त्रम् । आमिषादिदानेन मृगपक्षि-धारणार्थं पातिते यन्त्रे ।
**कूटशाल्मलि** पु० कूटः मिथ्याभूतः शाल्मलिः । कृष्णशाल्मलौ
**कूटसंक्रान्ति** स्त्री० 'अर्द्धरात्रे व्यतीते तु यदा संक्रमते रविः । सा ज्ञेया कूटसंक्रान्तिरिति' स्मृत्युक्ते रवेरर्द्धरात्रोत्तरं राश्यन्तरसञ्चारे ।
**कूटसाक्षिन्** त्रि० कर्म्म० । साक्ष्ये मिथ्याभिधायिनि ।
**कूटस्थ** त्रि० कूटोऽयोधनवत् निश्चलं यथा तथा तिष्ठति स्था-क । एकरूपतया सर्व्वकालस्थायिनि परिणामादिकार्य्यान्तरशून्ये-आकाशादौ, ब्रह्मणि च । व्याघ्रनखाख्यगन्धद्रव्ये पु० ।
**कूटागार** न० कर्म्म० । गृहागारे, चन्द्रशालिकायाम्, (चिलावर) क्रीड़ागृहे च । [मये अस्त्रभेदे ।
**कूटायुध** न० कर्म्म० । अन्तर्गुप्तनिशितशस्त्रे वहिःकाष्ठादि-
**कूटार्थभाषा** स्त्री० कूटार्थस्य कल्पितार्थस्य भाषा कथा । प्रबन्धकल्पनारूपायां कथायाम् ।
**कूड** घनीभावे तुदादि० पर० अक० सेट् । कूडति अकूडीत् ।
**कूण** सङ्कोचे अद० चुरा० उभ० अक० सेट् । कूणयति-ते अचुकूणत् त ।
**कूण** सङ्कोचे चुरा० आत्म० अक० सेट् । कूणयते अचूकुणत ।
**कूणि** त्रि० कूण-इन् । रोगादिना सङ्कुचितनखकरादौ जने
**कू(कु)प** दौर्बल्ये अद० चुरा० उभ० अक० सेट् । कू(कु)पयति-ते अचुकू(कु)पत्-त ।
**कूप** पु० कुत्सिताः ईषत् वा आपो यत्र अच् समा०, कुवन्ति मण्डूकाः अस्मिन् कू-पक् दीर्घस्य वा । स्वनामख्याते जला-

धारे, गर्त्ते च। ततः संज्ञायां कन्। नौकादौ गुणाधारे (मास्तुल) काष्ठमये दण्डे। [रोमाञ्चे।

**कूपाङ्क(ङ्ग)** पु० कूपाकारोऽङ्कश्चिह्नं कूपाकारमङ्गं वास्मिन्।

**कूपार** पु० कुं पृथिवीं पिपर्त्ति पूरयति अण् पूर्व्वदीर्घः। समुद्रे

**कूपी** स्त्री०कूप-अच् गौ०ङीष्। स्नेहादिधारणार्थे चर्म्ममये पात्रभेदे

**कूर्च** पु०न० कुर्य्यते कुर-चट् नि० दीर्घः। भ्रुवोर्मध्ये, स्थिते लोमोच्चये, श्मश्रुणि, कैतवे, दम्भे, मयूरपुच्छे, कुशमुष्टौ, अङ्गुष्ठाङ्गुलिमध्यस्योपरिभागे, अङ्घ्रौ, शीर्षे, आसनभेदे, तन्त्रोक्ते वीजभेदे च (हुम्)। [द्वयोऽप्यत्र।

**कूर्चशिरस्** न० ६त० अङ्घ्रिस्कन्धे (गुडमुडा)। [शेखरा-

**कूर्चशीर्ष** पु० कूर्चं श्मश्रु तद्वत् शीर्षमस्य। नारिकेले। कूर्च

**कूर्चिका** स्त्री० कूर्च+श्मश्रु अस्त्यर्थे ठन्। (क्षीरसा) दुग्धविकारे, सूचिकायां, तूलिकायाम्. कुट्मले, कुञ्चिकायाञ्च द्रव्यमार्जनसाधने द्रव्ये,-(कुंचि) तृणगुच्छे च।

**कूर्पास** पु० कुर्पासवत् सर्व्वम्।

**कूर्म्म** पु० कुत्सितः कौ वा ऊर्म्मिर्वेगो यस्य पृ०। कच्छपे, "उन्मीलने स्मृतः कूर्म्म" इत्युक्ते देहस्थे वायुभेदे च।

**कूर्म्मचक्र** न० कूर्म्माकारं चक्रम्। ज्योतिषोक्ते कृषिकर्म्मोपयोगिनि, तन्त्रोक्ते जपादिकर्म्मोपयोगिनि च कूर्म्माकारे चक्रभेदे

**कूर्म्मपुराण** न० कूर्म्मेण कूर्म्मावतारेण भगवता उक्तम् पुराणम्। अष्टादशसु पुराणेषु मध्ये पुराणभेदे।

**कूर्म्मपृष्ठक** न०कूर्म्मस्य पृष्ठमिव इवार्थे कन्। शरावे (शरा)।

**कूल** आवृतौ भ्वा० पर० सक० सेट्। कूलति अकूलीत्।

**कूल** न०कूल-अच्। नद्यादेर्जलसमीपस्थाने तीरे,स्तूपे,शैलपृष्ठे च

**कूलक** पु० कूल-ण्वुल्। कृमिपर्व्वते,वल्मीके स्थाने। (उएरढीपि)

**कूलङ्कष** पु०कूलं कषति कष-खच् मुम् च। समुद्रे। नद्यां स्त्री०

**कूवर** पु०न० कूङ् शब्दे कुटादि वरच्। रथस्य चक्राकाष्ठासङ्गके काष्ठे युगन्धरे, कवचे च। रथे त्रि०।

**कूष्माण्ड** पु० कुत्सित उष्मा अण्डेषु वीजेषु यस्य। (कुमड़ा) वृक्षभेदे गणदेवताभेदे च। जातित्वात् ङीष् कुष्माण्डीत्यप्यत्र।

**कृ** कृतौ भ्वा०उभ०सक०अनिट्। करति ते अकार्षीत् अकृत।

**कृ** कृतौ तना० उभ० सक० अनिट्। करोति कुरुते अकार्षीत् अकृत। कृत्रिमः। [अकृत।

**कृ** वधे स्वादि उभ० सक० अनिट्। कृणोति कृणुते अकार्षीत्

**कृक** पु० कृ-कक्। गले।

**कृकण** पु० कृ इति कणति कण-शब्दे अच्। (कयार) क्रकर पक्षिणि, क्षुधाकारके देहस्थे वायुभेदे च।

**कृकर** पु० कृ इति शब्दं करोति। क्षुधाकरे देहस्थे वायौ।

**कृकलास** पु० कृकं कण्ठं लासयति अण्। सरटे (कांकलास) पक्षिणि। [मयूरे, सरटे च।

**कृकवाकु** पु० कृकेण वक्ति वच-परिभाषणे ञुण् कस्य। कुक्कुटे,

**कृकाटिका** स्त्री० कृकं कण्ठमटति अट-ण्वुल् टाप् कापि-अत इत्त्वम्। ग्रीवायामुन्नतदेशे।

**कृच्छ्र** न० कृत-रक् छोऽन्तादेशः। कष्टे,दुःखे, तत्कारणे-पापे, कष्टदायके-प्राजापत्यादिव्रते, मूत्रकृच्छ्ररोगे च। तद्वति त्रि०।

**कृत** छेदे तुदा० पर० सक० सेट्। मुचादि। कृन्तति अकर्त्तीत् कर्त्तिष्यति-कर्त्स्यति कृत्तः।

**कृत** वेष्टे रुधा०पर०सक० सेट्। कृणत्ति कृन्तः अकर्त्तीत्।

**कृत** न०कृ-क्त। 'चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युग' मिति मनूक्ते दिव्यमानेन चतुःसाहस्रमितवर्षे, मानुषमानेन १७२८०००मितवर्षे, सत्ययुगे,पर्य्याप्ते,अलमर्थे, फले च। रचिते त्रि०।

**कृतक** न० कृत०कुन्। विड्लवणे। कृत्रिमे,मिथ्याकल्पिते च त्रि०।

**कृतकृत्य** त्रि० कृतं कृत्यं कर्त्तव्यं येन। कृतार्थे समाप्तकार्य्ये, धन्ये, विदुषि च।

**कृतक्षण** त्रि० कृतः क्षणः समयो येन। लब्धावकाशे।

**कृतघ्न** त्रि० कृतं हन्ति हन-क। कृतोपकारस्य जनस्य अपकारे प्रवर्त्तमाने 'कृतघ्ने नास्ति निष्कृति'रिति पुराणम्।

**कृतच्छिद्रा** स्त्री० कृतं छिद्रं यस्याः। कोषातकीलतायाम्।

**कृतज्ञ** त्रि० कृतं कृतोपकारं जानाति ज्ञा-क। कृतोपकार ज्ञातरि-प्रत्युपकारके। कुक्कुरे पु०।

**कृतधी** त्रि० कृता सम्पादिता धीर्येन। शास्त्राभ्याससंस्कृतान्तःकरणे, स्थिरचित्ते, 'कृतधीः किं प्रभाषेते'ति गीता।

**कृतप्रणाश** पु० कृतयोः पुण्यापुण्ययोर्भोगमन्तरेण प्रणाशो नाशः। कृतहानौ।

**कृतम्** अव्य० कृत-कमु। अलमर्थे, निषेधे च।

**कृतमाल** पु० कृता मालास्य। आरग्वधे,(सोन्दाल) कर्णिकारे च

**कृतलक्षण** त्रि० कृतानि लक्षणान्यस्य। गुणैर्विख्याते।

**कृतवर्म्मन्** पु० हृदिकासुते यादवे क्षत्रियभेदे।

**कृतश्रम** त्रि० कृतः श्रमो येन। महोत्साहान्विते।

**कृतवीर्य्य** पु० कृतं वीर्य्यमनेन। एकवीरनृपात्मजे कार्त्तवीर्य्यार्जुनजनके नृपभेदे। वीर्य्यान्विते त्रि०।

**कृतविद्य** त्रि० कृता अभ्यस्ता विद्या येन। अभ्यस्तविद्ये।

**कृतसापत्निका** स्त्री० कृतं सापत्न्यं यस्याः कप् यलोपः टापि अत इत्त्वम्। अध्यूढायां स्त्रियां यस्या विवाहात् पश्चात् तत्प्रतिना विवाहान्तरं कृतं तस्याम्।

कृतस्वर पु० कृतः स्वरो यत्र । स्वर्णोत्पत्तिस्थाने स्वर्णाकरे ।

कृतहस्त त्रि० कृतः अभ्यस्तः हस्तो वाणादित्यागमोक्षणलाघव कृपा हस्तशिक्षा येन । सुशिक्षितशरमोक्षणविद्ये जने ।

कृताकृत न० कृतं कार्य्यमकृतं कारणं च समा० द्व० । कार्य्य-कारणयोः । कर्म्म० । कृते अकृते च होमादौ । अतएव ऋत्विग्विशेषस्य ब्रह्मणः कृताकृतावेक्षणाय होमादौ वरणम्

कृताञ्जलि पु० कृतोऽञ्जलिरिव पत्रसङ्कोचो येन । लज्जालु-वृक्षे । संपुटीकृतहस्ते त्रि० ।

कृतात्मन् पु० कृतः शिक्षितः संस्कृतो वा आत्माऽन्तकरणं यस्य । शिक्षितचित्ते, शुद्धान्तःकरणे च ।

कृतात्यय पु० कृतस्य कर्म्मजन्यभोगस्यात्ययोऽवसानम् । भोगं विना कृतकर्म्मनाशे 'कृतात्ययेऽनुशयवानि'ति शारीरकसूत्रम्

कृतान्त पु० कृतः अन्तो विपर्य्ययनाशो निश्चयो विषयपरिच्छेदो वा येन । ज्ञातसिद्धान्ते । कृतो नाशो येन । दैवे, पापे यमे च ।

कृतान्न न० कृतं पक्वञ्च तदन्नञ्च । लड्डुकादौ पक्वान्ने, 'कृतान्न मुदकं स्त्रिय' इति स्मृतिः ।

कृतार्थ त्रि० कृतः अर्थः प्रयोजनं येन । कृतकार्य्ये ।

कृतास्त्र त्रि० कृतं शिक्षितमस्त्रं येन । शिक्षितास्त्रे ।

कृति स्त्री० कृ-क्तिन् । पुरुषप्रयत्ने, कर्त्तृव्यापारे, विंशत्यक्षर-पादके छन्दोभेदे च । [वति, निपुणे, साधौ, कृतार्थे च ।

कृतिन् स्त्री० कृतमनेन इष्टादित्वादिनि । पण्डिते, योग्ये, पुण्य

कृत्त त्रि० कृत-क्त । छिन्ने, वेष्टिते च ।

कृत्ति स्त्री० कृत-क्तिन् । चर्म्मणि, भूर्ज्जपत्रे च ।

कृत्तिका स्त्री० कृत-क्तिन् संज्ञायां कन् । अश्विन्यवधिके तृतीये नक्षत्रे । [युक्तकाले सुतो जातः । चन्द्रे ।

कृत्तिकासुत पु० कृत्तिकायाः सुतः । स्कन्दे, कृत्तिकानक्षत्र-

कृत्तिवासस् पु० कृत्तिश्चर्म्म वासो यस्य, कृत्तिं वस्ते वस-असुन् वा । शिवे ।

कृत्य न० कृत-क्यप् । कार्य्ये, व्याकरणोक्तेषु ण्यत्क्यप्तव्या-नीयर्यत्केलिमाख्येषु प्रत्ययेषु पु० । कर्त्तव्ये त्रि० ।

कृत्यविद् त्रि० कृत्यं कर्त्तव्यं वेत्ति विद्-क्विप् । कार्य्यज्ञे, विधिज्ञे, कृत्यविदित्युवाचेति रघुः । [देवभेदे च ।

कृत्या स्त्री० कृ-क्यप् टाप् । क्रियायाम्-अभिचारक्रियाजन्ये,

कृत्रिम न० कृ-क्त्रि मप् च । विड्लवणे, काचलवणे, तुरुष्क-नामगन्धद्रव्ये, रसाञ्जने च । सिद्धके द्वादशविधपुत्रान्तर्गते पुत्रभेदे च पु० । क्रियया निष्पन्नमात्रे त्रि० ।

कृत्स्न न० कृत-क्स्न । सकले, जले, कुक्षौ च । अशेषे त्रि०

कृन्तन न० कृत-ल्युट् । नि० मुम्च । छेदने, 'कृन्तनं नखकेशानां छेदनञ्च वनस्पते'रिति स्मृतिः ।

कृप कल्पने भ्वा० आत्म० लुङि लुटि लृटि लृङि च उभ० इतादि अक० वेट् । कल्पते । अकल्पत् अकल्पिष्ट अक्लृप्त । कल्प्तासि कल्पितासे कल्प्तासे कल्प्स्यति कल्पिष्यते ।

कृप दौर्बल्ये अद० चुरा० उभ० अक० सेट् । कृपयति ते अचिकृपत्-त ।

कृप युतौ चित्रीकरणे वा चुरा० पक्षे भ्वादि० पर० । कल्पयति ते कल्पति अचीकल्पत्-त अकल्पीत् ।

कृप पु० कृप-क । शरद्वतः पुत्रे द्रोणश्यालके कृपाचार्य्ये ।

कृपण पु० कृप-क्युन् । कृमौ । मन्दे, क्षुद्रे च 'कृपणाः फल-हेतव' इति गीता । दीने, 'कार्पण्यदोषोपहतस्वभाव' इति गीता अदातरि च त्रि० । [परदुःखेच्छायाम् ।

कृपा स्त्री० कृप-अङ् । दयायां फलनिरपेक्षतया दीनजनानु-

कृपाण पु० कृपां नुदति नुद-ड । खड्गे । ङीप् । कृपाणीत्यप्यत्र । छुरिकायाम्, कर्त्तर्य्याञ्च ।

कृपालु त्रि० कृपां लाति ला-डु । कृपायुक्ते ।

कृपी स्त्री० द्रोणाचार्य्यस्य पत्न्याम् शरद्वतो दुहितरि ।

कृपीट न० कृप-कीटन् । उदरे, तोये च ।

कृपीटयोनि पु० कृपीटस्य जलस्य योनिः । वह्नौ "वायो-रग्निरग्नेराप इति श्रुतेरस्य जलयोनित्वम् ।

कृमि पु० क्रम-इन् सम्प्रसारणञ्च । कीटात् सूक्ष्म-जन्तौ । तज्जातायां-लाक्षायां, उदरजातकीटयुक्तरोगे च ।

कृमिकण्टक पु० कृमिरिव कण्टकोऽस्य । विडङ्गे उडुम्बरे चित्रायाञ्च । [क । कौषेये (रेशमिवस्त्रे) ।

कृमिकोषोत्थ न० कृमेः कोषात् उत्तिष्ठते उत्पद्यते उद्-स्था-

कृमिघ्न पु- कृमिं हन्ति हन-क । विडङ्गे, पलाण्डौ, कोलकन्दे, भल्लातके च । हरिद्रायाम् स्त्री० टाप् । धूपपत्रायां स्त्री० ङीप्

कृमिज न० कृमिभिर्जन्यते जन-कर्म्मणि ड । अगुरुणि चन्दने । कृमितोजाते त्रि० । लाक्षायां स्त्री० टाप् ।

कृमिफल पु० कृमयः फलेऽस्य । उडुम्बरे ।

कृमिशैल पु० कृमीणां शैल इव । वल्मीके ।

कृमीलक पु० कृमीन् ईरयति जनयति ईर-ण्वुल् रस्य लः । वनमुद्गे । [अकर्शीत् ।

कृश तनूकरणे दिवा० पर० सक० सेट् । कृश्यति अकृशत्-

कृश त्रि० कृश-क्त नि० । अल्पे, सूक्ष्मे च ।

कृशाङ्गी स्त्री० कृशमङ्गमस्याः । प्रियङ्गुवृक्षे । कृशदेहे त्रि०

कृशानु पु० कृश-आनुक् । वह्नौ चित्रकवृक्षे च ।

कृशानुरेतस् पु० कृशानौ वह्नौ रेतोऽस्य । शिवे । देव्या मोदुमशक्यस्य शिववीर्य्यस्याग्नौ प्रक्षेपः कृतोऽस्तिभः

कार्त्तिकेयो जातः इति पुराणकथा अनुसन्धातव्या ।

**कृष** आकर्षणे विलेखने च तुदा० आत्म० सक० अनिट् । कृषते । अकृक्षत-अकृष्ट ।

**कृष** आकर्षणे विलेखने च भ्वा० पर० सक० अनिट् । कर्षति अक्राक्षीत्-अकार्क्षीत्-अकृक्षत् ।

**कृषक** पु० कृष-क्वुन् । फाले, वृषे । कर्षके त्रि० ।

**कृष(श)(स)र** पु० तिलतण्डुलसम्पाकः कृ(श)(ष)सर, परिकीर्त्तित इत्युक्ते तिलमिश्रिते पक्वे तण्डुलाद्यन्ने ।

**कृषि** स्त्री० कृष-इक् । वैश्यवृत्तिभेदे भूमिकर्षणरूपे शस्योत्पादनव्यापारे । कर्म्मणि इक् । भूमौ ।

**कृषिजीविन्** त्रि० कृष्या जीवति जीव-णिनि । स्वयमस्वयं वा कृतया कृषिवृत्त्या जीविनि ।

**कृषीवल** त्रि० कृषिरस्यास्ति वलच् दीर्घश्च । कर्षके ।

**कृष्टपच्य** त्रि० कृष्टे क्षेत्रे स्वयमेव पच्यते पच-क्यप् । धान्यादौ

**कृष्ण** पु० कृष-नक् । भगवतोऽवतारतारभेदे वासुदेवे देवकीनन्दने । "कृषिर्भूवाचकः शब्दः णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्णइत्यभिधीयते" इत्युक्ते परब्रह्मणि, वेदव्यासे, अर्ज्जुने मध्यमपाण्डवे च । कृष्णवर्णत्वात् काके, कोकिले, करमर्द्दके (करमचा) वृक्षे, नीले, वर्णे च तद्वति त्रि० । कालागुरुणि अशुभकर्म्मणि च न० । द्रौपद्यां, नीलीवृक्षे, कणायां, द्राक्षायां, नीलपुनर्नवायाम्, कृष्णजीरके, गाम्भार्य्यां कटुकायाम्, राजसर्षपे, पर्प्याम्, काकोल्यां, सोमराज्याञ्च कृष्णवर्णत्वात् स्त्री० टाप् । नीलाञ्जने, लौहे, मरिचे च पु० ।

**कृष्णकलि** पु० कृष्ण इव चूडालः कलिः कलिकाऽस्य । स्वनामख्याते पुष्पप्रधाने वृक्षे । [त्रि० ।

**कृष्णकाय** पु० कृष्णः कायो यस्य । महिषे । कृष्णवर्णतनुयुक्ते

**कृष्णगन्ध** पु० कृष्ण उग्रो गन्धोऽस्य । शोभाञ्जनवृक्षे ।

**कृष्णगर्भ** पु० कृष्णवर्णो गर्भोऽस्य । कट्फले । [ख्याते पुष्पवृक्षे ।

**कृष्णचूड़ा** स्त्री० कृष्णस्य चूड़ा इव चूड़ाऽस्य । स्वनाम-

**कृष्णचूर्ण** न० कृष्णस्य चूर्णम् । लौहमले (लोहार गु) ।

**कृष्णजटा** स्त्री कृष्णा जटा यस्याः । जटामांस्याम् ।

**कृष्णजीरक** पु० कर्म्म० । कृष्णवर्णजीरके (कालजीरे)

**कृष्णद्वैपायन** पु० द्वीपे भवः फञ् कर्म्म० । वेदव्यासे तस्य पराशरात् यमुनाद्वीपे एव जन्मेति पुराणम् ।

**कृष्णधत्तू(धत्तू)र** पु० कर्म्म० (कनकधुतरा) वृक्षभेदे ।

**कृष्णपर्णी** स्त्री० कृष्णं पर्णमस्याः । कालतुलसी) कृष्णतुलस्याम्

**कृष्णपक्ष** पु० कर्म० । प्रतिपदाद्यमावस्यान्तासु पञ्चदशसु तिथिषु "चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मक" इत्युक्ते मासार्द्धे काले । [टस्य । करमर्द्दे ।

**कृष्णपाक** पु० पच्यते इति पाकः फलं कृष्णः कृष्णवर्णः पाको

**कृष्णपाकफल** पु० कृष्णपाकं फलमस्य । करमर्द्दे ।

**कृष्णफल** पु० कृष्णं पाकावस्थायाम् फलमस्य । करमर्द्दे, सोमराज्यां स्त्री० टाप् । [कटुकायाम् ।

**कृष्णभेद** पु० कृष्णोवर्णेन भेदश्छेदः खण्डोऽस्य । वा ङीप् ।

**कृष्णमुद्ग** पु० कर्म्म० । (कालमुग) मुद्गभेदे ।

**कृष्णरुह** स्त्री० कृष्णः सन् रोहति रुह-क । जतुकालतायाम्

**कृष्णलवण** न० कर्म्म० । सौवर्च्चलवणे । (कालालोण) ।

**कृष्णलक** पु० कृष्णं वर्णं लाति गृह्णाति ला-क संज्ञायां कन् । गुञ्जाफले तस्यार्द्धकृष्णत्वात्तथात्वम् 'पञ्चकृष्णलकोमाष' इति मनुः

**कृष्णला** स्त्री० कृष्णं वर्णमर्द्धफले लाति ला-क टाप् । गुञ्जायाम्

**कृष्णलौह** न० कर्म्म० । अयस्कान्ते ।

**कृष्णलोहित** पु० कृष्णः सन् लोहितः वर्णो वर्णेनेति समा० । रक्तकृष्णमिश्रितवर्णे । तद्वति त्रि० ।

**कृष्णवक्त्र** पु० कृष्णं वक्त्रमस्य । वानरे ।

**कृष्णवर्ण** पु० कृष्णो वर्णोऽस्य । राहौ यमे । कृष्णः अशुद्धो वर्णः । शूद्रे । ब० । कृष्णवर्णवति त्रि० ।

**कृष्णवर्त्मन्** पु० कृष्णं वर्त्म धूमप्रसाररूपगतिस्थानमस्य । वह्नौ, राहौ यमे, चित्रकवृक्षे च । कृष्णमपवित्रं वर्त्माचरणं यस्य । दुष्टकर्मकारके त्रि० ।

**कृष्णवल्लिका** स्त्री० कर्म्म० । जतुकालतायाम् ।

**कृष्णवल्ली** स्त्री० कर्म्म० । कृष्णतुलस्याम्, कर्कट्याञ्च ।

**कृष्णबीज** पु० कृष्णं बीजमस्य । रक्तशिग्रौ । कालिङ्गे न० ।

**कृष्णवृन्त** स्त्री० कृष्णं वृन्तमस्याः । पाटलावृक्षे माषपर्ण्याञ्च । संज्ञायां कन् कापि अत इत्वम् । गाम्भार्य्याम् ।

**कृष्णशा(सा)र** पु० कृष्णश्चासौ शारः (सारः) शवलश्च वर्णो वर्णेनेति स० । कालसारमृगे ।

**कृष्णशालि** पु० कर्म० (कालधान) धान्यभेदे ।

**कृष्णशिम्बिका** स्त्री० कर्म० । काकाण्डाम् ।

**कृष्णशिग्रु** पु० कर्म० । कृष्णशोभाञ्जने (कालसजना) ।

**कृष्णशृङ्ग** पु० कृष्णं शृङ्गमस्य । महिषे ।

**कृष्णसर्षप** पु० कर्म० । (राइ सर्षा) राजसर्षपे ।

**कृष्णसार** पु० कृष्णः सारोऽस्य । शिंशपावृक्षे (शिशु)

**कृष्णस्कन्ध** पु० कृष्णः स्कन्धोऽस्य । तमालवृक्षे ।

**कृष्णागुरु** न० कर्म० । कालागुरुणि, 'कृष्णं गुणाधिकं तत्तु लोहवत् वारि मज्जती'त्युक्तलक्षणे धूपकाष्ठे ।

**कृष्णाजिन** न० कर्म० । कृष्णशारमृगचर्म्मणि ।

**कृष्णायस** न० कर्म० टच् समा० । कृष्णलौहे अयस्कान्ते ।

**कृष्णार्चिस्** पु० कृष्णः कृष्णता अर्च्चिर्भ्यो यस्य । कृष्णताकारकशिखे वह्नौ ।

**कृष्णार्जक** पु० कर्म० । विषघ्ने (कालतुलसी) वनबर्बरे ।

**कृष्णावास** पु० कृष्णस्यावासोऽस्मिन् । अश्वत्थवृक्षे ।

**कृष्णिका** स्त्री० कृष्णेव संज्ञायां कन् । (राइ) राजसर्षपे ।

**कृष्णेक्षु** पु० कर्म० । (काजला) इक्षुभेदे ।

**कृष्य** स्त्री० कृष-अर्हार्थे क्यप् । कर्षणार्हायाम् भूमौ ।

**कॄ** विक्षेपे तुदा० पर० सक० सेट् । किरति अकारीत् । कीर्णः

**कॄ** हिंसने क्र्यादि० उभ० सक० सेट् । कृणाति अकारीत् ।

**कॄ** विज्ञाने चुरा० आत्म० सक० सेट् । कारयते अचीकरत ।

**कॄत** संशब्दे चु० उभ० सक० सेट् । कीर्त्तयति-ते अचकीर्त्तत्-त

**कॢप्त** त्रि० कॢप्-क्त । रचिते, नियते, 'कॢप्तेन सोपानपथेनेति रघुः ।

**केकय** पु० देशभेदे, तद्राजस्य अणो बहुषु लुक् । तद्देशराजभेदे च ब०व० । तद्योगात् जन्यजनकभावोपचारात् केकयी स्त्री० भरतमातरि । [व्रताच्चियुक्ते पुरुषे (टेरा)

**केकर** पु० के मूर्द्ध्नि कर्त्तुं शीलमस्य कृ-अच् अलुक् स० । निम्ना-

**केका** स्त्री० के मूर्द्ध्नि कायते कर्मणि ड अलुक् स० । मयूरवाण्याम्

**केकावल** पु० केका+अस्त्यर्थे वलच् । मयूरे ।

**केकिन्** पु० केका+अस्त्यर्थे इनि । मयूरे ।

**केचन** अव्य० किमः+पुंसि जसिरूपं ततश्चन । केचिदित्यर्थे एवं केचिदित्यप्यत्र । [केतत्-त ।

**केत** मन्त्रणे अद० चुरा० उभ० सक० सेट् । केतयति-ते अचि

**केतक** पु० कित-निवासे ण्वुल् । 'केतकः सूचिकापुष्पोजम्बुकः क्रकचच्छद' इत्युक्तलक्षणे वृक्षे । तत्पुष्पे न० । गौरादि० ङीष् । केतकीत्यप्यत्र ।

**केतन** न० कित-भावाधिकरणकर्म्मकरणेषु यथायथं ल्युट् । स्पृहे, निमन्त्रणे; केतौ, ध्वजे, चिह्ने, कृत्ये च ।

**केतु** पु० चाय-तुक्य देशः । रोगे, द्युतौ, पताकायाम्, चिह्ने, रिपौ च । राहोः शरीरात्मके उपग्रहे । तेषामुत्पातरूपता ज्योतिषे सिद्धा ब० । ब० ।

**केतुमाल** न० 'सुकेतनं केतुमालं प्रतीच्यां गन्धमादना' दित्युक्ते जम्बुद्वीपस्य नवखण्डान्तर्गते खण्डभेदे ।

**केदार** पु० के शिरसि दारोऽस्य । पर्व्वतभेदे, तत्स्थे शिवलिङ्गभेदे, भूमिप्रभेदे, आलवाले, क्षेत्रे च ।

**केनिपात** पु० के जले निपातोऽस्य अलुक् स० । अरित्रे नौकादेर्गतिनियामके (हाल) इति प्रसिद्धे काष्ठे । वा कपि तत्रैवार्थे

**केन्दु** पु० कुत्सित इन्दुः कोः कादेशः । तिन्दुकवृक्षे । संज्ञायां कन् (गाव) गालकवृक्षे ।

**केमुक** पु० के शिरसि अमयति रुजति अम-उक् अलुक् स० । (केन्द) इतिख्याते केन्दुवृक्षे । फलं केमुकवर्जितमिति स्मृतिः

**केयूर** पु० के बाहुशिरसि याति या-ऊरक् अलुक् स० । (बाजु) (ताड़) बाहुभूषणे ।

**केरल** पु० ब०व० । 'सुब्रह्मण्यं समारभ्य यावद्देशो जनार्द्दन! तावत् केरलदेशः स्यादित्युक्ते देशे । वैदिकयागानधिकारिणि-श्मश्रुधारिणि' कोलिसर्पा माहिषका दर्वाश्चोलाः सकेरलाः । सर्वे ते क्षत्रियास्तात । धर्मस्तेषां निराकृत इति हरिवंशोक्ते क्षत्रियभेदे च ।

**केल** चालने भ्वा० पर० सक० सेट् । केलति अकेलीत् । णिचि अचिकेलत् त । [स्त्री० वा ङीप् ।

**केलि** पु० स्त्री० केल-इन् । परीहासे, क्रीडायाञ्च । पृथिव्यां

**केलिवृक्ष** पु० केलेः क्रीडार्थं वृक्षः । केलिकदम्बवृक्षे ।

**केलिसचिव** पु० केलौ सचिवः सहायः नर्म्मसचिवे क्रीडाविषये मन्त्रिणि । [अचिकेवत् त ।

**केव** सेवने भ्वा० आत्म० सक० सेट् । केवते अकेविष्ट, णिचि

**केवल** त्रि० केव-कलच् के सरसि वलयति वल-अच् अलुक् स० । एके, कृत्स्ने च । निश्चिते, ज्ञानभेदे, शुद्धे च न० ।

**केविका** स्त्री० केव-ण्वुल् टाप् । कोङ्कणदेशप्रसिद्धे केवेर इति ख्याते पुष्पप्रधाने वृक्षे, भृङ्गारौ च ।

**केश** पु० क्लिश्यते क्लिश्नाति वा क्लिश-अच् ललोपश्च कस्य ईशोवा । वरुणे, ह्रीवेरे, दैत्यभेदे, विष्णौ, चिकुरे च मज्जवातुजातोपधातुविशेषोऽयं केशः । अस्य परवर्त्तिनः पाशादिशब्दाः केशभूयस्त्ववाचिनः । बालास्तु तत्पराः पाशो रचना भार उच्चयः । हस्तः पक्षः कलापश्च केशभूयस्त्ववाचकादित्युक्तेः ।

**केशकीट** पु० ६त० । यूकाख्ये केशकीटे । (उकुण) [मार्गे

**केशपर्णी** स्त्री० केश इव पर्णमस्याः जातित्वात् ङीप् । अपा-

**केशपाशी** स्त्री० केश+पाश-गौरा० ङीष् । शिखायाम् केशमध्यस्थचूड़ायाम् । [शमीवृक्षे ।

**केशमथनी** स्त्री० केशै र्बद्धा मथ्यतेऽसौ मथ ल्युट् ङीप् ।

**केशमार्जक** न० केशान् मार्ष्टि मृज-ण्वुल् । (कांकुइ चिरुणि) ख्याते केशप्रसाधिकायां कङ्कतिकायाम् ।

**केशर** पु० के जले शीर्य्यते शॄ-अप् । सिंहस्कान्धस्थायां जटायाम्, अश्वस्कान्धस्थकेशेषु. पुन्नागवृक्षे, वकुलवृक्षे, नीलकेशरवृक्षे सुरानामगन्धद्रव्ये च । हिङ्गुले न० किञ्जल्के पु०न०

**केशरञ्जन** पु० केशान् रञ्जयति रञ्ज-णिच् ल्यु । भृङ्गराजवृक्षे (भीमराज)

**केशराज** पु० केशा राजन्ते ऽनेन घञ् । भृङ्गराजे (भीमराज)

**केश(स)रिन्** पु० केश(स)राः सन्त्यस्य इनि । सिंहे अश्वे, पुन्नागवृक्षे नागकेशरवृक्षे, बीजपूरकवृक्षे हनुमत्पितरि वानरभेदे च

**केशरूपा** स्त्री० केशस्येव रूपमस्याः । वन्दाकवृक्षे (परगाछा)

**केशव** पु० केशौ ब्रह्मरुद्रौ सर्वेश्वरावपि अनुकम्प्यतया वाति वा-ड. केशं केशिनं असुरं आद्यच वाति हिनस्ति वा-क वा । विष्णौ । 'यस्मात् त्वयैष दुष्टात्मा हतः केशी जनार्द्दन ! तस्मात् केशवनाम्ना त्वं लोके ख्यातो भविष्यसीत्युक्तेः । 'अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः सर्वज्ञाः केशवं तस्मात् मां प्राहुर्द्विजसत्तमा इत्युक्तेः सूर्य्यांशवति परमेश्वरे च । केश+प्रशस्त्ये व । प्रशस्तकेशवति त्रि० ।

**केशवर्द्धिनी** स्त्री० केशान् वर्द्धयति वृध-णिच्-णिनि । सहदेवीलतायाम् ।

**केशवेश** पु० केशस्य वेशः । कबरीबन्धने । [सहदेवीलतायाम् ।

**केशारूढा** स्त्री० केशा आरोहन्त्यनया रुह-घञर्थे क ।

**केशिक** त्रि० प्रशस्तः केशोऽस्त्यस्य ठन् । प्रशस्तकेशयुक्ते जने

**केशिका** स्त्री० केशिन इव कायति प्रकाशते कै-क । शतावरीवृक्षे । [वति । विष्णौ, दैत्यभेदे, सिंहे च पु० ।

**केशिन्** त्रि० प्रशस्ताः केशाः सन्त्यस्य केश+इनि । प्रशस्तकेश-

**केशिनिसूदन** पु० केशिनं निसूदयति हिनस्ति नि+सूद-णिच्-ल्युट् । कृष्णे केशिहादयोऽप्यत्र ।

**केश्य** न० केशाय हितं केश+यत् । कृष्णागुरुणि । भृङ्गराजे पु०

**केसर** न० के जले सरति सृ-अच् । हिङ्गौ, नागकेशरपुष्पे कासीसे, स्वर्णे च । नागकेशरवृक्षे, तुरङ्गसिंहयोः केशे, सिंहस्कन्धस्थजटायां पुन्नागवृक्षे, बकुलवृक्षे च पु० । किञ्जल्के पु०न० ।

**कै** शब्दे भ्वा० पर० अक० अनिट् । कायति अकासीत् ।

**कैकयी** स्त्री० केकयानां देशानां राजा तस्यापत्यम् अणि ङीप् । दशरथपत्न्यां भरतमातरि । [केकयदेशनृपे ।

**कैकेय** पु० केकय+राजनि+अञ् नि० अत एत्वं वृद्धिः ।

**कैकेयी** स्त्री० कैकेयस्यापत्यं स्त्री अण् । भरतमातरि दशरथपत्न्याम्

**कैटभ** पु० कीटवत् भाति भा-क स्वार्थे अण् । दैत्यभेदे ।

**कैटभजित्** पु० कैटभं जितवान् जि-भूते क्विप् तुक् च । विष्णौ । कैटभार्य्यादयोऽप्यत्र ।

**कैटर्य्य** पु० किट त्रासे घञ् कीटं राति रा-अतितिक्तत्वात् क स्वार्थे ष्यञ् । निम्बे, भूनिम्बे कट्फले, पूतिकरञ्जे मदनवृक्षे च ।

**कैतव** न० कितवस्य कर्म्म अण् । कपटतायाम् स्वार्थे अण् । द्यूते, वैदूर्य्यमणौ, धुस्तूरपुष्पादौ च । [क्षेत्रसमूहे न०

**कैदार** पु० केदारस्य क्षेत्रस्यायम् अण् । केदारजन्ये शालिधान्ये।

**कैदार(रि)क** न० केदार+समूहार्थे वुञ् ठञ् वा । क्षेत्रसमूहे

**कैरव** न० के जले रौति रु-अच् अलुक् स० केरवो हंसस्तस्य प्रियम् अण् । कुमुदे, शुक्लोत्पले, शत्रौ च ।

**कैरविणी** स्त्री० कैरव+इनि । कुमुदसमुदाये तद्युक्तलतायाञ्च ।

**कैरवी** स्त्री० कैरवाय हिता अण् । चन्द्रिकायाम् ।

**कैरात** पु० किरात इव शूरः इवार्थे अण् । बलवत्पुरुषे, किरातदेशे (पर्य्यन्तदेशे) भवः अण् । भूनिम्बे शम्बरचन्दने च न०

**कैराल** न० केरलदेशे भवम् अण् । विडङ्गे ।

**कैलास** पु० के जले लासो लसनं दीप्तिरस्य अलुक्स०. केलसः स्फटिकस्तस्येव शुभ्रः अण् केलीनां समूहः अण्-कैलं तेनास्यते ऽत्र आस घञ् वा । शिवकुवेरयोः स्थाने ।

**कैलासपति** पु० ६त० । शिवे । [(जेले) धीवरजातौ ।

**कैवर्त्त** पु० के जले वर्त्तते वृत-अच् अलुक् स० ततः स्वार्थे अण् ।

**कैवर्त्तमुस्तक** पु० कर्म० । जलस्थितमुस्तके (केशुर) ।

**कैवल्य** न० केवलस्य शुद्धस्य उपाधिरहितस्य भावः । मोक्षे ।

**कैशिक** न० केशानां समूहः ठक् । केशसमूहे । नाटकप्रसिद्धे वृत्तिभेदे स्त्री० ङीप् सा० ६ प० ।

**कैशोर** न० किशोरस्य भावः अञ् । 'पौगण्डं दशमावधि, कैशोरमापञ्चदशादि'त्युक्तायां किशोरावस्थायाम् ।

**कैश्य** न० केशानां समूहः ष्यञ् । केशसमूहे ।

**कोक** पु० कोकते कुक-आदाने अच् । चक्रवाके, वृके, ज्येष्ठ्याम् खर्ज्जुरीवृक्षे. दर्दुरे विष्णौ च ।

**कोकनद** पु० कोकान् चक्रवाकान् नदति नादयति अन्तर्भूतण्यर्थे नद-अच् । रक्तकुमुदे, रक्तपद्मे च । [तद्वति त्रि० ।

**कोकनदच्छवि** पु० कोकनदस्येव छविर्दीप्तिर्यस्य । रक्तवर्णे

**कोकबन्धु** पु० कोकयोश्चक्रवाकयोर्मेलनकारित्वात् बन्धुरिव । सूर्य्ये । [जातौ स्त्रियां टाप् ।

**कोकिल** पु० कुक-आदाने इलच् । स्वनामख्याते विहगभेदे

**कोकिलाक्ष** पु० कोकिलस्याक्षीव रक्तमक्षि पुष्पं यस्य । (तालमाखना) वृक्षभेदे, करवीरभेदे, इक्षुगन्धायाञ्च ।

**कोकिलावास** पु० ६त० । आम्रवृक्षे ।

**कोकिलेक्षु** पु० कोकिल इव कृष्ण इक्षुः । (काजला) इक्षुभेदे ।

**कोङ्कण** पु० कोमिति कणन्यत्र । "अथाभ्यङ्गं समारभ्य कोटिदेशस्य मध्यगो समुद्रप्रान्तदेशो हि कोङ्कणः परिकीर्त्तित" इत्युक्ते देशभेदे ।

**कोच** पु० कुच-अच् । देशभेदे, तद्देशस्थे 'तीवरस्यैव च पुत्रः मांसच्छेदसमुद्भवः । कोचजातिरिति ख्यात' इत्युक्ते जातिभेदे च ।

**कोजागर** पु० कोजागर्त्तीति वदयस्मिन् पु० । आश्विनपौर्णमास्याम् । 'निशीथे वरदा लक्ष्मीः कोजागर्त्तीतिवादिनी'ति ।

**कोट** पु० कुट-घञ् । कौटिल्ये, दुर्गे च (गड़) ।

**कोटर** पु०न० कोटं कौटिल्यं राति रा-क । वृक्षस्य गह्वरे ।

**कोटवी** स्त्री० कोटं वाति वा-क गौरा० ङीष् । नग्निकायां स्त्रियां दुर्गायाञ्च ।

**कोटि** स्त्री० कुट-इञ् । धनुषोऽग्रभागे वस्तुमात्रस्याग्रभागे, प्रकर्षे (पिड़िङ्गशाक) संशयस्यालम्बने, वादे निर्णयार्थं कृते पूर्वपक्षे, शतलक्षमितसंख्यायां, तत्संख्येये च । वा ङीप् कोटीत्यप्यत्र । [गोपकीटे ।

**कोटिक** पु० कोट्या बहुधा कायति प्रकाशते कै-क । इन्द्र

**कोटिर** पु० कोटिं राति रा-क । इन्द्रे, नकुले, इन्द्रगोपकीटे च

**कोटिवर्षा** स्त्री० कोटिभिरग्रैर्वर्षति मधु वृष-अण् । (पिड़िङ्ग) शाकभेदे ।

**कोटि(टी)श** पु० कोट्या अग्रेण श्यति शो-क । लोष्टभेदनेऽस्त्रे

**कोटीर** पु० कोटिमीरयति ईर-अण् । किरीटे, जटायाञ्च ।

**कोट्ट** पु० कुट्ट-घञ् नि० गुणः । दुर्गे(गड़) राजधानीभेदे च ।

**कोट्टवी** स्त्री० कोट्टं वाति वा-क गौरा० ङीष् । नग्नायां स्त्रियाम् लम्बकेश्याञ्च ।

**कोट्टार** पु० कुट्ट-आरक् पृ० । कूपे पुष्करिण्याः पाटके च ।

**कोठ** पु० कुठि-अच् नि० नलोपः । मण्डलाकारे कुष्ठरोगे ।

**कोण** पु० कुण-करणे घञ् कर्त्तरि अच् वा । येन चतुराकृतिना काष्ठेन वीणादयोवाद्यन्ते तस्मिन् वादनसाधने काष्ठे, गृहादीनामेकदेशे, अस्त्रौ, अस्त्राणामग्रभागे, लगुडे, मङ्गलग्रहे च । [मत्कुणे (उकुण) ।

**कोणकुण** पु० कोणे मलकैकदेशे कुणति शब्दति कुण-क ।

**कोदण्ड** न० कु-शब्दे विच् कोर्दण्डोऽस्य । धनुषि, भ्रूलतायां, देशभेदे च ।

**कोद्रव** पु० कु-विच् कोः द्रवति द्रु-अच् कर्म्म० (कोदो) धान्यभेदे

**कोप** पु० कुप-भावे घञ् । क्रोधे कामाप्राप्तिजे चित्तवृत्तिभेदे ।

**कोपनक** पु० कुप-युच् कोपनः स इव कायति कै-क । चोरनामकगन्धद्रव्ये ।

**कोपना** स्त्री० कुप-युच् टाप् । मत्तया कोपवत्यां स्त्रियाम् । कोपशीले त्रि० । [कोपशालिनि त्रि० ।

**कोपिन्** पु० अवश्यं कुप्यति णिनि । जलपारावते । अवश्य

**कोमल** न० कु-कलच् मुट् नि० गुणः । जले । मृदौ, अकठिने, मनोहरे च त्रि० । चीरिकायां स्त्री० टाप् ।

**कोमलवल्कली** स्त्री० कोमलं वल्कलं यस्याः । लवल्याम् ।

**कोयष्टि** पु० कं जलं यष्टिरिवास्य पृ० अत ओत्वम् । जलकुक्कुभे पक्षिणि । संज्ञायां कन् । (टिटिर) टिट्टिभपक्षिणि

**कोरक** पु०न० । कुर्य्यते कुर-वुन् । कलिकायाम्, मृणाले, कक्कोले च 'विकारकोरकायोति' माघः । अमरे पुंलिङ्गोक्तिः प्रायिकाभिप्रायेण ।

**कोरङ्गी** स्त्री० कुर-अङ्गच् ङीष् । सूक्ष्मैलायाम्, पिप्पल्याञ्च

**कोरदूष** पु० कोरं दूषयति दुष-णिच् अण् (कोदो) धान्यभेदे

**कोल** पु० कुल-संस्त्याने अच् । क्रोडे-शनिग्रहे, शूकरे, उडुपे (डोङ्गा), भुजान्तरे, भेलके, चित्रायाम् (चिता),अस्त्रभेदे, टङ्कद्वयमाने, जातिभेदे, देशभेदे च । चव्ये, मरिचे, तोलकमाने, वदरफले च न० ।

**कोलक** पु० कुल-ण्वुल् । अङ्कोठवृक्षे,बहुवारवृक्षे (कांकला) च । गन्धद्रव्यभेदे, मरिचे, कक्कोले च न० ।

**कोलकन्द** पु० कोलमिव कन्दोऽस्य । महाकन्दभेदे ।

**कोलदल** न० कोलं वदरीफलमिव दलमस्य । नखीनामगन्धद्रव्ये

**कोलपुच्छ** पु० कोलस्य शूकरस्येव पुच्छोऽस्य । कङ्कपक्षिणि

**कोलमूल** न० कोलस्य वदर्य्या इव मूलम् । पिप्पलीमूले ।

**कोलम्बक** पु० कुल-अम्बच् संज्ञायां कन् । तन्त्रीभिन्ने अलाबू प्रभृतिसमुदाये वीणायाः काये । [प्पल्याम् ।

**कोलवल्ली** स्त्री० कोलइव वल्ली तत्तुल्यरोमवत्त्वात् । गजपि-

**कोलशिम्बि** स्त्री० कोलपादाकारा शिम्बिरस्याः । 'आलकशीति ख्यातायां शूकरपादिकायां लतायाम् ।

**कोला** स्त्री० कुल-अच् टाप् । पिप्पल्याम्, चव्यभेषजे, कोलिवृक्षे, देशभेदे च ।

**कोलाविध्वंसिन्** त्रि० कोलां विध्वंसितं वस्त्रं शीलमस्य विपूर्वेण धातोरन्यार्थपरत्वम् । पर्वतवासिनि स्त्रेच्छभेदे, 'एवं पालयतस्तस्य म्लेच्छाः पर्वतवासिनः । कोलाविध्वंसिनः प्राप्ता इति देवीभागवतम् । कोलाविध्वंसिनस्तथेति देवीमाहात्म्यम् । कोलाशब्दः कोलाहलवाचकस्तथा च कोलाहलेनैव राज्यविध्वंसं कुर्व्वन्ति ये । तेषु ।

**कोलाहल** पु० कुल-घञ् तमाहलति अण् । बहुविधे दूरगामिन्यव्यक्ते शब्दे ।

**कोलि** पु० स्त्री० कुल-इन् । वदर्य्याम् स्त्रीत्वपक्षे वा ङीप् ।

**कोविद** पु० कुङ्-शब्दे-विच् कोर्वेदस्तं वेत्ति विद-क । पण्डिते विदुषि ।

**कोविदार** पु० कुं भूमिं विदृणाति-वि+दृ-अण्। रक्तकाञ्च-
नारे (रक्तकाञ्चन) ।

**कोश(ष)** पु० कुश(ष) घञ् । पानपात्रे, कुड्मले, खड्गपिधाने,
(खाप) कृताकृतयोः स्वर्णरूप्ययोः, अर्थसञ्चये, पेश्याम्
अण्डकोषे, शब्दादिसंग्रहे, योनौ, शिम्बायाम्, गुप्तगेहे,
हिरण्यादिस्थापनगृहे, मञ्जूषायाम्, आच्छादके, पनसादि
फलस्यान्तःस्थावयवभेदे च (कोया) । [टाप् ।

**कोशफल** न० कोशे फलमस्य। कक्कोले, त्रपुष्याम् (शशा) स्त्री०

**कोशल** पु०स्त्री० कुश-कलच् नि०गुणः । अयोध्यापुरे वा टाप्

**कोशलात्मजा** स्त्री० कोशलानां राजा तद्राजस्य लुक् (दृत०।
रामचन्द्रस्य मातरि । [ठन् । उत्कोचे (घुष)

**कोश(ष)लिक** न० कोशं(षं) धनसञ्चयं लाति ला-क ततः भावे

**कोशाङ्ग** पु०न० कोशाकारमङ्गमस्य । वङ्कमूले वृक्षभेदे ।

**कोशा(षा)तकी** स्त्री०कोश(ष)मतति ण्वुल् गौरा०ङीष्।(झिङ्गा)
पटोल्यां तत्फलेऽपि हरीतक्यादित्वात् स्त्रीत्वम् ।

**कोशिला** स्त्री० कोश+अस्त्यर्थे पिच्छादित्वाद् इलच् । शुद्र-
पर्ण्याम् । [धान्याद्यग्रभागे च (शुङ्गा)

**कोशी(षी)** स्त्री० कुश (कुष) अच् गौरा० । चर्म्मपादुकायाम्

**कोष** पु० कोशवत् ।

**कोषचञ्चु** पु०कोषाकारा चञ्चुर्यस्य । सारसपक्षिणि ।

**कोषवृद्धि** स्त्री० कोषस्य धनसञ्चयस्य वृद्धिः । धनवृद्धौ । कोष-
स्याण्डस्य वृद्धिर्यस्मिन् । रोगभेदे पु० ।

**कोषशायिका** स्त्री० कोषे शेते शी-ण्वुल् । छुरिकायाम् ।

**कोषिन्** पु० कोष+इनि । आम्रवृक्षे ।

**कोष्ठ** पु० कुष-थन् । गृहमध्ये, उदरमध्ये, धान्यादिस्थापने
कुसूले च (कुटी) कात्मीये त्रि० । [त्रि०

**कोष्ण** न० ईषदुष्णम् कोः कादेशः । ईषदुष्णस्पर्शे । तद्वति

**कोसल** पु०कौ पृथिव्यां सलति उत्कर्षं गच्छति अच् पृ०गुणः ।
सरयूतीरनिविष्टे देशे । अयोध्यायां स्त्री० । [भेदे च ।

**कोहल** पु०कौ हलति स्पर्द्धते अच् पृ०गुणः । वाद्यभेदे मद्य-

**कौक्कुटिक** पु० कुक्कुटीं मायां, पादपतनदेशञ्च पश्यति ठक् ।
दाम्भिके, कीटादिबधभीत्या पादक्षेपस्थानद्रष्टरि संन्यासिनि च

**कौक्षेयक** कुक्षौ इततं बद्धः ढकञ् । इततकुक्षिबद्धे खड्गे

**कौट** पु० कूटे अद्रिशृङ्गे भवः अञ् । कुटजे (कुरची) कुक्ष्यां
प्रायभवः । स्वतन्त्रे त्रि० ।

**कौटज** पु० कूटमेव कौटं तत्र जातः । कुटजे वृक्षे । [व्याधे

**कौटतक्ष** पु० कर्म्म० । स्वाधीनकर्म्मोपजीविनि । [जीविनि

**कौटिक** त्रि० कूटेन मृगबन्धनयन्त्रेण चरति ठक् । मांसविक्रय

**कौडविक** त्रि० कुडवः सम्भवति (स्वस्मिन् समावेशयति) तस्य
वापः वपनयोग्यं क्षेत्रम् वा ठक् । कुडवधान्यस्थापनयोग्ये,
पात्रे, तद्वपनयोग्ये क्षेत्रे च ।

**कौणप** पु० कुणपः शवः भक्ष्यत्वेन विद्यतेऽस्य अण् । राक्षसे ।

**कौतुक** न० कुतुक+प्रज्ञा दित्वात् स्वार्थे अण् । अपूर्वदर्शनौत्सुक्ये

**कौतूहल** न० कुतूहल+प्रज्ञादित्वात् स्वार्थेऽण् । कौतुके ।

**कौद्रवीण** त्रि० कोद्रवाणां भवनं क्षेत्रम् ख । (कोदो) धान्य-
भेदभवनयोग्ये क्षेत्रे । षधौ ।

**कौन्ती** स्त्री० कुन्तिषु देशेषु भवा अण् ङीप् । भक्तगन्धियो-

**कौप** त्रि० कूपे भवः अण् । 'भूमौ खातोऽल्पविस्तारो गम्भीरो
मण्डलाकृतिः । बद्धोऽबद्धः स कूपः स्यात्तदम्भः कौपमु-
च्यते' इत्युक्ते कूपोदके, स्त्रियां ङीप् न विरसाः कौपी-
रपः पास्यतीति साहि० ३प० ।

**कौपीन** न० कूपे पतनमर्हति अकार्य्यार्थे नि० । पापे, तद्वति
त्रि० । गोप्यत्वात् पुरुषलिङ्गमपि कौपीनम् तदाच्छादकत्वात् ।
मेखलानिबद्धे वस्त्रखण्डे च । 'कौपीनवन्तः खलु भाग्यवन्त'
इति पुराणम् ।

**कौमार** न० कुमारस्य भावः अञ् । 'जातः कुं पृथिवीं पद्भ्यां
मारयेत् स कुमारक' इत्युक्तलक्षणायां 'कौमारं पञ्चमा-
ब्दान्तमित्युक्तावस्थायां कौमारं यौवनं जरेति गीता ।

**कौमारी** स्त्री० कुमारस्य कार्त्तिकेयस्येयम् अण् । कार्त्तिकेय
शक्तौ, इतकुमारीशिफायाञ्च । अपूर्वपतिः कुमारी'
मुपपन्नेति कौमारापूर्व्ववचने इत्यण् । भार्य्यायाम् ।

**कौमुद** पु० 'कौ मोदन्ते जनायस्मिन् कौमुदस्तेन कीर्त्तित इत्युक्त
चिह्ने कार्त्तिकमासे ।

**कौमुदी** स्त्री० कुमुदानां हर्षहेतुरियम् अण् । ज्योत्स्नायां
तत्सम्पर्के हि कुमुदप्रकाशः कविकल्पितः । कौ मोदन्ते जना
यस्यान्नानाभावैः परस्परम् । हृष्टास्तुष्टाः सुखापन्नास्तेन सा
कौमुदी मता' इत्युक्तलक्षणायां कार्त्तिकपौर्णमास्याम् ।
आश्विनपौर्णमास्यामपि ।

**कौमोदकी** स्त्री० कोः पृथिव्याः पालकत्वात् मोदकः कुमो-
दको विष्णुः तस्येयम् अण् । विष्णुगदायाम् ।

**कौरव** पु० कुरोरयम् कच्छादित्वादण् । कुरुन्वपसन्ततौ धृत-
राष्ट्रात्मजेषु पाण्डवेषु च उभयोरपि कुरुवंशजातत्वात् ।

**कौरव्य** पु० कुरु-ण्य । कुरुवंशजे क्षत्रिये । बहुषु लुक् । कुरवः

**कौल** त्रि० कुले सत्कुले भवः अण् । सत्कुलीने । तन्त्रोक्ते कुला-
चाररते च । [सत्या भिक्षुक्याः पुत्रे । स्त्रियां ङीप् ।

**कौलटिनेय** पु०स्त्री० भिक्षुक्याः सत्या अपत्यम् ढक् इनादेशश्च ।

**कौलटेय** पु॰ स्त्री॰ कुलटायाः सत्याः असत्या वा अपत्यम् । ढक् । सत्याः असत्याश्च कुलटायाः पुत्रे । स्त्रियां ङीप् ।

**कौलटेर** पु॰स्त्री॰कुलटायाः असत्या अपत्यम् ढ्रक् । बन्धक्याः पुत्रे

**कौलिक** त्रि॰कुलाद् गतः ठक् । कुलपरम्परागते । कुलेनाचरितः ठक् । कुलाचारे । कौलं कुलधर्मं प्रवर्त्तयति ठक् । कुलधर्मप्रवर्त्तके तन्त्रोक्ते शिवे, मन्वादौ च ।

**कौलीन** न॰ कौ पृथिव्यां लीनं यस्मात् अलुक् स॰ । गुह्ये, परीवादे, दुष्कार्य्ये च । कुलीनस्य भावः कर्म वा । कुलीन कर्मणि, प्राणिभिर्द्यूते च ।

**कौलेय** त्रि॰ कुले+भवः ढक् । सत्कुलोत्पन्ने ।

**कौलेयक** पु॰ कुले भवः श्वा ढकञ् । कुलागते कुक्कुरे ।

**कौवेरी** स्त्री॰ कुवेरस्येयम् अण् । मातृभेदे, उत्तरदिशि च।

**कौशल** न॰ कुशलस्य भावः अण् । क्रियायां नैपुण्ये ।

**कौशलिका** स्त्री॰ कुशलस्य पृच्छा ठक् । कुशलप्रश्ने । कुशलाय स्वमङ्गलाय नीयते ठञ् । उपायने उपढौकने ।

**कौशलेय** पु॰ कौशल्यायाः अपत्यम् ढक् यलोपः । रामचन्द्रे

**कौशल्या** स्त्री॰ कुशलैव चातुर्वर्ण्यादित्वात् ष्यञ् । राममातरि

**कौशाम्बी** स्त्री॰ कुशाम्बेन निर्वृत्ता नगरी अण् । वत्सपत्तने

**कौशिक** पु॰ कुशिकस्य गोत्रापत्यम् ऋष्यण् । विश्वामित्रे मुनौ। कोशे भवः ठक् । नकुले, व्यालग्राहे, पेचके, इन्द्रे, गुग्गुलौ च । कोशेऽधिकृतः ठक् । कोषाध्यक्षे ।

**कौशिकफल** पु॰ कौशिकेन विश्वामित्रेण सृष्टं फलं यस्य । नारिकेले । [शत्रुत्वं लोकसिद्धम् ।

**कौशिकाराति** पु॰ ६त॰ । पेचकशत्रौ काके तस्य पेचक-

**कौशिकी** स्त्री॰ "शरीरकोशाद्यत्तस्याः पार्वत्याः निःसृताम्बिका । कौशिकीति समाख्यातेत्युक्तलक्षणायां दुर्गायाम् नदीभेदे 'कौशिकी चन्द्रभागा चे'ति स्मृतिः नाट्ये वृत्तिभेदे च

**कौशेय** त्रि॰ कोशादुत्थितम् ढक् । कृमिकोषादिजाते वस्त्रे ।

**कौसल्या** स्त्री॰ कोसलस्य राज्ञोऽपत्यं ष्यङ् । राममातरि पाणिनिसूत्रे दन्त्यसकारनिर्द्देशात् दन्त्यसकारस्थानयम् ।

**कौसल्यायनि** पु॰ कौसल्याया अपत्यं फिञ् । श्रीरामे ।

**कौसुम्भ** पु॰ कुसुम्भ+स्वार्थे अण् ) अरण्यकुसुम्भे शाकभेदे च कुसुम्भेन रक्तम् अण् । कुसुम्भरागरञ्जिते वस्त्रादौ त्रि॰

**कौसृतिक** त्रि॰ कुसृत्या चरति ठक् । मायाकारके शाठ्ययुक्ते।

**कौस्तुभ** पु॰ कुं भूमिं स्तुभ्नाति कुस्तुभोजलधिः तत्र भवः अण् । विष्णोर्वक्षःस्थे 'कौस्तुभस्तु महातेजाः कोटिसूर्य्यसमप्रभ, इत्युक्तलक्षणे मणिभेदे ।

**कौस्तुभवक्षस्** ६ब॰ कौस्तुभो वक्षसि यस्य । विष्णौ ।

**क्नथ** वधे वा॰ चु॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰ सेट् घटादि । क्नथयति-ते क्नथति अचिक्नथत्-त अक्नथीत्-अक्नाथीत् ।

**क्नस** दीप्तौ कौटिल्ये च दिवा॰ पर॰ अक॰ सेट् घ॰ । क्नस्यति अक्नसीत्-अक्नासीत् क्नसयति-ते क्नसित्वा-क्नस्त्वा ।

**क्नस** दीप्तौ वा॰चु॰उभ॰ पक्षे भ्वा॰ क्नसयति-ते । क्नसति । अचिक्नसत्-त अक्नसीत्-अक्नासीत् । क्नसित्वा-क्नस्त्वा ।

**क्नू** शब्दकरणे क्र्यादि॰ उभ॰सक॰सेट् प्वादि॰ । क्नुनाति क्नुनीते अक्नावीत् अक्नविष्ट ।

**क्नूय** दुर्गन्धे आर्द्रीभावे शब्दे च भ्वा॰ आत्म॰ अक॰ सेट् । क्नूयते अक्नूयिष्ट । क्नोपयति ते । क्नूतः ।

**क्मर** कौटिल्ये भ्वा॰ पर॰ अक॰ सेट् । क्मरति अक्मारीत् ]

**क्रकच** पु॰ क्र इति कचति शब्दायते कच-शब्दे अच् । ग्रन्थिलाख्ये वृक्षे । करपत्रे (करात) पु॰ न॰ । ज्योतिषोक्ते योगभेदे च ।

**क्रकचच्छद** पु॰ क्रकच इव छदो यस्य । केतकीवृक्षे ।

**क्रकचपाद्**(द) क्रकचमिव पादो यस्य वा अन्त्यलोपः । कृकलासे

**क्रकचपृष्ठी** स्त्री॰ क्रकच इव पृष्ठं यस्याः । (कइ) मत्स्यभेदे ।

**क्रकण** पु॰क्र इति कणति शब्दायते कण-अच् । (कयार) पक्षिणि

**क्रकर** पु॰ क्र इति शब्दं कर्त्तुं शीलमस्य ताच्छील्येऽच् (कयार) क्रकणे पक्षिणि ।

**क्रतु** पु॰ कृ-कतु । यूपसहिते, तद्रहिते वा यज्ञे, संकल्पे, 'यथाक्रतुरस्मिन् तथा प्रेत्य भवती'ति श्रुतिः । ब्रह्मणः कराज्जाते मरीच्याद्यन्तर्गते मुनिभेदे, वैश्वदेवभेदे, इन्द्रियेषु च ।

**क्रतुदोषनुद्** पु॰ क्रतूनामिन्द्रियाणां दोषं नुदति क्विप् । प्राणायामे "दह्यन्ते ध्मायमानानां धातूनाञ्च यथा मलाः । प्राणायामैस्तथा दोषाः प्रशम्यन्तीन्द्रियगं च इत्युक्तेस्तस्येन्द्रियदोषनाशकत्वम् ।

**क्रतुद्विष्** पु॰ क्रतुं द्वेष्टि द्विष-क्विप् । असुरे, नास्तिके च ।

**क्रतुध्वंसिन्** पु॰ क्रतुं दक्षयज्ञं ध्वंसयति ध्वन्स-णिच्-णिनि । शिवे । [देवे ।

**क्रतुभुज्** पु॰ क्रतुं यज्ञे दत्तहविरादिकं भुङ्क्ते भुज-क्विप् ।

**क्रतुराज** पु॰ क्रतूनां राजा टच्समा॰ । राजसूययज्ञे ।

**क्रथ** बधे भ्वा॰ पर॰ सक॰ सेट् घटा॰। क्रथति अक्रथीत्-अक्राथीत् । क्रथयति-ते । [थत्-त ।

**क्रथ** प्रतिहर्षे चु॰ उभय॰ सक॰ सेट् क्राथयति-ते अचिक्र-

**क्रथन** न॰ क्रथ बधे ल्युट् । मारणे छेदने च राज योद्धांसकूट क्रथनपटुरिति प्रबोधचन्द्रोदयः । संज्ञायां कन् उष्ट्रे ।

**क्रद** रोदने वैकल्ये अक॰ आह्वाने सक॰ भ्वा॰ पर॰ सेट् ।

